योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 273 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 28 जुलाई 2021 बुधवार | पृष्ठ-4 | मूल्य- 2 रुपये

## सुभाषितम्

मूर्खस्य पञ्च चिह्नानि गवी दुर्वचनं तथा।
क्रोधश्च दृढवादश्च पर-वाक्येष्वनादरः॥

अर्थ – एक मुर्ख के पांच लक्षण होते है घमण्ड, दुष्ट वार्तालाप, क्रोध, जिद्दी तर्क और अन्य लोगों के लिए सम्मान में कमी।

## संक्षिप्तवार्ता:

### येदियुरप्पः त्यागपत्रेण धर्माचार्याः आक्रोशिताः



येदियुरप्पा लिंगायत समुदायतः आयाति कर्नाटकस्य 17प्रतिशतं जनसंख्या लिंगायतः 224 विधानसभा क्षेत्रेषु 100 क्षेत्रेषुप्रभावः कर्नाटक। कर्नाटकस्य मुख्यमंत्री बीएस यो-दियुरप्पा त्यागपत्रं अददत्। अस्य त्यागपत्रानन्तरे यत्र भाजपानवमुख्यमंत्रिणः चयने संलग्ना अस्ति तत्रैव कर्नाटके सर्वाधिकं प्रभावकारिताः लिंगायतानां प्रमुखाः येदिइत्यस्य अपवारणस्य निणर्यं त्रुटिपूर्णंअभवत्। राज्यस्य 5000 मठाधीशः विरोधेसमावतरिताः। कर्नाटके 5000 लिंगायतमठानाम् प्रमुखाः अब्रवीत् येदि इत्यमुं अपवारणस्य निणर्यः त्रुटिपूर्णः, भाजपादलम् अस्य परिणामं भोगायत्तं भविष्यति।

## मुख्यमन्त्रिणा योगिना आदित्यनाथेन अयोध्यायां चिकित्सा महाविद्यालयस्य कृतं निरीक्षणम्

# चतुर्वर्षेषु उत्तरप्रदेशस्य चिकित्सा सुविधा अभवत् सुदृढा, निर्मिताः द्वात्रिंशच्चिकित्सा महाविद्यालयाः

**लखनऊ।** अयोध्यायां नवनिर्मितस्य चिकित्सामहाविद्यालयस्य निरीक्षणकाले मुख्यमन्त्रिणा योगिना आदित्यनाथेन उक्तं यत् गतचतुर्वर्षेषु अस्माभिः द्वात्रिंशच्चिकित्सामहाविद्यालयाः तु निर्मिताः। अनेकेषु महाविद्यालयेषु शैक्षिकसत्राणि आरब्धानि, अधुना तत्र परास्नातकाय अपि आवेदनं कारयितुं सिद्धता अस्ति। मुख्यमन्त्रिणा उक्तं यत् अस्मिन् सत्रे चतुर्दशनूतनाः महाविद्यालयाः भारतसर्वकारस्य सहयोगेन स्वीकृताः । नवषष्टिवर्षेषु प्रदेशे यत्र द्वादशचिकित्सा महाविद्यालयाः आसन् । तत्रैव चतुर्वर्षेषु द्वात्रिंशच्चिकित्सा महाविद्यालयानां निर्माणं कारितम्। आगामिसमये सर्वाधिक चिकित्सा महाविद्यालयवतः उत्तरप्रदेशस्य नाम स्वीकरिष्यते । मुख्यमन्त्रिणा योगिना उक्तं यत् अयोध्यायां द्विशतशय्यानाम् एकस्य चिकित्सालयस्य निर्माणकार्यम् आरभते । अयोध्या चिकित्सा महाविद्यालये सर्वाणि कार्याणि सम्यग्तया भवन्ति । आगामिसमये अयोध्यावासिभ्यः इतोऽपि उत्तमा सुविधा प्रदातुं प्रयासः सर्वकारेण करिष्यते । तेनोक्तं यत् अयोध्या एकस्मिन् वैश्विकमानचित्रे स्थानं निर्मातुम् अग्रसरः अस्ति । मुख्यमन्त्रिणा उक्तं यत् कोरोणा सङ्क्रमणस्य द्वितीयालहर्याम् अस्माकं योद्धृभिः, सैन्यकर्मिभिः, जनप्रतिनिधिभिश्च सम्यक् कार्यं कृतम् । कस्यचिद् अपि रोगस्य उपचारेण सह जागरूकता अपि अत्यावश्यकी अस्ति । तेनोक्तं यत् अस्माभिः केवलम् उपचारे एव अवधानम् अकरिष्यत् तर्हि अस्माकं परिणामः यूरोपः, अमेरिका चेत्यनयोः देशयोः सदृशः अभविष्यत् । अमेरिकादेशः विश्वस्य सर्वतोवृहद् शक्तिः अस्ति । अमेरिकादेशस्य यूरोपदेशस्य च स्वास्थ्यं प्रत्याधारिकसंरचना भारतस्य अपेक्षया बहु उत्तमा अस्ति, परन्तु जागरूकताम् अतिरिच्य तेन उपचारे अधिकम् अवधानं दत्तं, येन ते अत्र अनुत्तीर्णाः अभवन् । भारतस्य तुलनायाम् अमेरिकादेशस्य जनसङ्ख्या चतुर्थांशी अस्ति । अमेरिकादेशस्य स्वास्थ्यस्य आधारिकसंरचना भारतस्य अपेक्षया नैकगुणिता उत्तमा तद् अतिरिच्य भारतेन सार्धैकगुणिताधिकमृत्युप्रतिशतम् अमेरिकादेशस्य आसीत् । एतत् दशर्यति यत् केवलं स्वास्थ्यस्य आधारिकसंरचनया एव अस्माकं लक्ष्यप्राप्तये न पर्याप्तम् , अपि च रोगात् रक्षणाय जागरूकतायाः एकं बहुवृहद् अभियानं भवितुमर्हति ।

## वैश्विकमानचित्रे भविष्यति अयोध्यायाः पृथक् परिचयः



## मुख्यमन्त्रिणा उक्तं उपचारेण सह जागरूकता आवश्यकी



### चिकित्सा महाविद्यालयः स्वास्थ्य जागरूकतायाः अपि केन्द्रं भवत



मुख्यमन्त्रिणा योगिना आदित्यनाथेन उक्तं यत् विशेषज्ञैः तृतीयलहर्याः चिन्ता अभिव्यक्ता। एतन्निमित्तं सर्वकारेण सिद्धता आरब्धा। तेनोक्तं यत् कोरोणा महामार्यया बहु किमपि शिक्षितम्। तस्मिन् रोगात् रक्षणाय सवीत्त-मोपायः सिद्धः। मुख्यमन्त्रिणा उक्तं यत् चिकित्सा शिक्षा स्वास्थ्य सुविधायाः एव केन्द्रं न भवति अपितु तेन स्वास्थ्य जागरूकतायाः अपि केन्द्र बिन्दुः भवेत्। यद्यपि उपचारेण महत्त्वपूर्णं रक्षणम् अस्ति यत् एकां वृहद् मानवशक्तिः रोगात् रक्षयितुं शक्नोति ।

### मस्तिष्क कलाशोधं प्रति प्राप्तं सदृशः रोगे नियन्त्रणम्



मुख्यमन्त्रिणा योगिना आदित्यनाथेन उक्तं अत्र ये चिकित्साच्छात्राः सदस्याः च उपविष्टवन्तः, ते जानन्ति यत् 1977तमेवर्षे मस्तिष्क कलाशोधस्य नाम्ना एकः रोगः आगतः आसीत् । तेन रोगेण 1977वर्षारभ्य 2017वर्षपर्यन्तं प्रतिवर्षं द्विसहस्रं मृत्यवः भवन्ति स्म । अस्मिन् रोगे एकवर्षारभ्य षोडश वर्षपर्यन्तं बालाः रोगे आगताः स्म । 1977वर्षारभ्य 1998वर्षपर्यन्तं केनापि सर्वकारेण एतत् सञ्ज्ञाने अपि न स्थापितम्। 1998तमे वर्षे यदा अहं सांसदः अभवं तदा एषा वार्ता मया संसदे उत्थापिता अद्य अस्माभिः मस्तिष्क कलाशोध सदृशः रोगे पूर्णरूपेण नियन्त्रण प्राप्तम्। अस्मिन् उपचारः जागरूकता च उभयमपि सहायकौ सिद्धौ अभवन्।

# उपमण्डल दिवसे आरक्षिस्थान दिवसे आगमिष्यमाणाः अभियोगाः भविष्यन्ति दृष्टिपथे-मुख्यमन्त्रि-कार्यालयः

**लखनऊ।** उपमण्डलदिवसे आरक्षिस्थानदिवसे आगमिष्यमाणानाम् अभियोगानाम् उपेक्षा अधुना अधिकारिभ्यः कष्टदा भवितुं शक्या । मुख्यमन्त्रिणा कार्यालयेन अधुना उपमण्डलदिवसे आरक्षिस्थानदिवसे च आगमिष्यमाणेषु अभियोगेषु साक्षाद्दृष्टिः स्थापयिष्यते । अभियोगानां निस्तारणे अपि च अधिकारिणां प्रगतेः समीक्षा साक्षान्मुख्यमन्त्रिकार्यालयाय प्रदास्यते । अनेन अभियोगानां प्रभाविरूपेण निस्तारणं भवितुं शक्ष्यते । उपमण्डलदिवसे आरक्षिस्थानदिवसे च आगमिष्यमाणाः अभियोगाः प्रभावजन्यरूपेण निस्तारयितुं मुख्यमन्त्रिकार्यालयः साक्षाद्दृष्टिं स्थापयिष्यति । अधुना सम्प्रति एव मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य निर्देशे उपमण्डलदिव-सस्य आरक्षिस्थानदिवसस्य च दिवसेषु परिवर्तनं कृतम् । अधुना प्रत्येकं मासस्य प्रथमद्वितीयसप्ताहे आरक्षिस्थानदिवसम् आयोजयितुं निर्देशः दत्तः । मुख्यमन्त्रिणा उच्चस्तरीयोपवेशने निर्देशः दत्तः यत् उपमण्डलदिवसे आरक्षिस्थानदिवसे च आगमिष्यमाणानि प्रकरणानि निश्चितरूपेण लम्बिताः न स्युः । जनानांशम् अभियोगेषु संवेदनशीलता दर्शयित्वा ते शीघ्रमेव निस्तारणीयाः। एतत् अतिरिच्य एकीकृताभियोगनिवारणप्रणाल्यां आगमिष्यमाणानि प्रकरणानि प्राथमिकतायाः आधारे निस्तारणीयाः। मुख्यमन्त्रिणा अधिकारिणः निर्दिष्टाः यत् विभागशः अभियोगानां स्थितिविषये मुख्यमन्त्रिकार्यालयः सूचनीयः।

## मुख्यमन्त्रिणा उक्तं यत् अवसरे एव निस्तारणं भवेत् अभियोगानां जनाः न भवेयुः विचलिताः, अभियोगानाम् उपेक्षा अधिकारिभ्यः कष्टदा भवितुं शक्या



### मुख्यमन्त्रिणः उपक्रमः जनेभ्यः प्राप्स्यते शीघ्रं न्यायः

प्रदेशसर्वकारस्य उपमण्डलदिवसम् आरक्षिस्थानदिवसं च प्रभावजन्यं निर्मातुं उपक्रमः जनेभ्यः व्यापकतोषदायकः भविष्यति । तेषां समस्या उपमण्डलस्तरे आरक्षिस्थानस्तरे एव दूरीकरिष्यते । अनेन तेभ्यः शीघ्रमेव न्यायः प्राप्तुं शक्ष्यते । जनेभ्यः स्वकीयै समस्यायै विभागेषु भ्रमणीयं न भविष्यति । स्थाने एव तेषां समस्यानां निस्तारणं भविष्यति । तदर्थम् अत्र आगमिष्यमाणानाम् अभियोगानां पर्यवेक्षणं मुख्यमन्त्रिकार्यालयेन करिष्यते । मुख्यमन्त्रिणा उक्तं जनतायाः संतुष्टिः एव अधिकारिणां कुशलतायाः कार्यम् अस्ति । तदर्थं जनानां समस्या प्राथमिकताधारे निस्तारणीया । येन ते संतुष्य गृहं गच्छेयुः ।

# वयोधिकेषु कोविड् प्रतिरोध क्षमता युक्तांशः न्यूनः इति अध्ययन फलम्

**नवदेहली।** वयोधिकेषु जनेषु कोविड् 19 वैराणुं प्रति-रोद्धुं क्षमतायुक्तांशः न्यूनः इति 'ओरिगण् हेल्त् आन्ट् सयन्स्' विश्वविद्यालयस्य वैज्ञानिकैः कृताध्ययनात् अवगम्यते। प्रतिरोधसूच्यौषधं स्वीकृते अपि तेषां वृद्धानां स्थितिः न सुरक्षिता इति एते अभिप्रयन्ति। अमेरिकायाः वैद्यसंघातस्य पत्रिकायाम् प्रतिवेदनमिदं प्रकाशितं वर्तते। फैस 'वाक्सिनस्य द्वितीयमात्रां स्वीकृत्य सप्ताहद्वयम् अतीतेषु 50 जनेषु आसीत् अध्यनम्। जना वयोभेदानुसारं श्रेणीकृत्य एव अध्ययनं प्रचालितम्। वृद्धानपेक्षया युवकेषु सप्तगुणितः प्रतिरोधक्षमतांशः अस्ति इति अध्ययनप्रतिवेदनेन स्फुटीक्रियते। तथापि सर्वेभ्यः रोगतीव्रतायां न्यूनत्वं दातुं प्रतिरोधौषधं शक्तं भवति इति प्रतिवेदने दृढीकृतं वर्तते।

## बालकानां कृते कोवाक्सिनं - परीक्षणफलं सेप्टम्बर मासे

नवदिल्ली बालकेभ्यः भारतबयोटेक् संस्थया सज्जीक्रियमाणस्य कोवाक्सिनं प्रत्यौषधस्य परीक्षणफलानि सेप्टम्बरमासे लप्स्यन्ते इति 'एयिंस'संस्थायाः निदेशकः डो. रणदीप गुलेरियः न्यवदयत्। परीक्षणानि पुरोगम्यन्ते। अधिकारिभिः अङ्गीक्रियन्ते चेत् सोपानत्रयमालक्ष्य 12-18, 6-12, 2-6 वयस्केभ्यः बालकेभ्यः वाक्सिनवितरणं सम्पत्स्यतीति सः अवदत्। भारतबयोटेकं विना 12-18वयस्केभ्यः वाक्सिनवितरणाय 'सैडस् काडिला' नामिका संस्थापि अनुमतिं प्रतीक्षमाणा वर्तते इति डो. रणदीपेनोक्तम्।

# अतिवृष्टि दुष्प्रभावः - महाराष्ट्रे मरणानि 138



**मुम्बई** चतुर्दिनानि यावत् अनुवर्तमानया अतिवृष्ट्या ततः उपपन्नेन जलोपप्लुवेन च महाराष्ट्रे 138 जनाः मृत्युमुपगताः। 53 जनाः अदृष्टाः अभवन्। वृष्टिदुष्प्रभावेण राज्ये गतदिवसेषु पञ्चसु स्थानेषु मृत्स्खलनम भवत्। उपपञ्चाशत् भवनानि विनाशितानि। ततः 89 मृतशरीराणि दुरन्तनिवारणसेनया अधिगतानि। रक्षाप्रवर्तनानि अनुवर्तन्ते।

## सम्पादकीयम्

# संस्कृत अमरवाणी देवभाषाअस्ति, न तु मृतभाषा

संस्कृत अमरवाणी देवभाषा अस्ति, न तुमृत भाषा। केचिद् जनाः दुष्प्रचारं कृत्वा भ्रामयन्ति। गतदिवसे लखनऊ विश्वविद्यालयस्य आंगुभाषा विभागे संस्कृत भाषामृत भाषा अस्ति इति व्याख्यानं गोष्ठी आयोजिता आसीत्। सुष्ठुवर्तते यत् तत्रस्थाः संस्कृत विभागस्य प्राध्यापकानां तथा अन्ये च संस्कृतानुरागी जनानां विरोध कारणात् गोष्ठी स्थगिता जाता। अधुना प्राचीन भारतीय संस्कृतिं संस्कारं च संरक्षयेत्। यदि संस्कृतिः संरक्षितः तर्हिराष्ट्र सुरक्षितो भवितुं शक्यते। मनसा वाचाकर्मणादेव भाषा संस्कृतस्य प्रचार-प्रसाराय च सततं प्रयासरतो भवेयुः ।

# ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शाती’

क्षेमेन्द्रस्य औचित्यविचारचर्चायां काव्यस्य जीवितभूतत्वेन औचित्यं स्वीकृतम्। क्षेमेन्द्रस्य पूर्वे आलङ्कारिकैः औचित्यं न स्पष्टतया स्वीकृतम्। क्षेमेन्द्रस्य औचित्यसिद्धान्तस्य मूलं तावदानन्दवर्धनाचार्यस्य ‘अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्’ इति वचनम्। औचित्यं तु सार्वकालिकमेकं स्थिरं तत्त्वम्। औचित्यं विना काव्यस्य शोभा न जायते।

कूटशब्दाः - औचित्यम्, चमत्कारः, संघटना, उचितम्, वक्रता इत्यादयः भूमिक संस्कृतालङ्कारशास्त्राम्बुधौ काव्यात्मतत्त्वचिन्तने प्रयतमाना आलङ्कारिकाः काव्यविच्छित्तिजनकानलङ्कारादीनङ्गीकुर्वन्ति। केचन रसं केचन वालङ्कारं केचन वा रीतिं केचन वा वक्रोक्तिं काव्यात्मरूपेण स्वीकुर्वन्ति; किन्तु व्यासदासापरपून्यनामा क्षेमेन्द्राचार्यो भिन्नरूपेणौचित्यं काव्यात्मतयाभिप्रैति। अधुना मनसि प्रश्नः समुदेति यत्- अस्यौचित्यस्य धारणा क्षेमेन्द्रेण कुत्र प्राप्यते? अथवेदमौचित्यं क्षेमेन्द्रस्य स्वशिरस्प्रसूतम्? अथवेदमौचित्यं पूर्वे एव स्थितम्। अलङ्कार तत्त्वालोचनाया मिदं स्पष्टी भविष्यति। वयं भरताचार्यस्य नाट्य शास्त्रानु सन्धानेन जानीमहे यत्- उचितस्थाने उचितप्रयोग एव सर्वथोचितः।2 भरतेन औचित्यप्रतिष्ठा न कृता, किन्तु नानाभावोपपन्नस्य नानावस्थान्तरात्मकस्य लोक वृत्तानुकरण भूतस्य नाटकस्य प्रमाणीभूते लोके भावाभिनय प्रकृति पाठ्य छन्दस्स्वरसंगीतादिविषयेष्वनुकूलतां प्रतिकूलतां वौचित्य मनौचित्यं वा स स्वीकरोति। औचित्यमन्तरेण सर्वं हास्यतामुपजायते। तथा हि तेनोक्तम् - अदेशजो हि वेषस्तु न शोभां जनयिष्यति। मेखलोरसि बन्धे च हास्यैवोपजायते। भरतपरवर्तिभामहेनौचित्यशब्दो नोल्लिखितः किन्त्वौचित्यस्य धारणा तेन प्रदत्ता। तन्मते दोषः कदाचिददोषत्वेन प्रतिपाद्यते-

1. शब्दसन्निवेशविशेषात्। 2. आश्रयसौन्दर्याच्च। यथा स्त्रक्षु नीलं पलाशं सौन्दर्यं जनयति। तथा शब्दसन्निवेशविशेषादुरुक्तमपि शोभते। पुनश्च रमणीनयनयोर्यथाञ्जनं शोभां जनयति तथा आश्रयसौन्दर्यादपि शोभां धत्ते। यथा ‘अपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे’- इत्युदाहरणे सन्निवेशविशेषात् गण्डपाण्डु शब्दयोः प्रयोगोऽदोषत्वेन प्रतिपादितः। पुनश्च ‘विक्लिन्न गण्डानां करिणां मदवारिभिः’ इति। ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शती’ इत्युदाहरणद्वये क्लिन्नगण्डशब्दयोः दोषत्वमाश्रयसौन्दर्याददोषत्वेन संस्थापितम्। भामहस्यात्र व्यक्ताभिप्रायस्तावत्कविना साधुशब्दाः प्रयोगी क्रियन्ते चेत् शब्दसन्निवेशविशेषादाश्रयसौन्दर्याद्वा व्यवह्रियन्ते। अर्थादौचित्यवशाच्छब्दप्रयोगे दोषो नोपजायते। भामहेन विषयोऽयमुदाहरणेन दृढ़ीक्रियते- ग्राम्यं सुरभि कुसुमं त्याज्यम्; किन्तु स्त्रक्षूपयुक्तस्थानविन्यासविरचितत्वात् शोभां धत्ते तथा काव्येष्वपि। दण्डिनः काव्यादर्शे औचित्यशब्दो नेक्ष्यते। तन्मते कविकौशलात्कदाचिद्विरोधो दोषगणनामुत्क्रम्य गुणवीथीं विगाहते। दण्डिनः ‘कविकौशलात्’ इति पदेनौचित्यवत्पदप्रयोगोऽव्यक्ततयोल्लिखितः। नवम शताब्द्यां रुद्रटस्य काव्यालङ्कारे ध्वनितं यत्- रीतिषूपयुक्त स्थानेष्वौचित्य वशाद्रसप्रयोगः समुचितः। दशमशतकस्य भोजराजेनाप्यनुरूपतयानुसरति दण्डिनो वक्तव्यम्। भोज देवस्य मते जात्यादीनां शब्दालङ्कारसंज्ञा। धारेश्वरभोजदेवेन चतुर्विंशतिप्रकारकाः शब्दालङ्कारजातयः स्वीकृताः। जातेः लक्षणप्रसङ्गे तेनोक्तम् - तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते । सा त्वौचित्यादिभिर्वाचामलङ्काराय जायते।। तन्मते औचित्याकृष्ट एवालङ्कारः। पुनश्च तेन वाच्यविषयदेशसमयौचित्यः दर्शिताः। अनन्तरं गतेरलङ्कारत्वनिर्णय प्रसङ्गे तेन गदितम् - पद्यं गद्यं च मिश्रं च काव्यं यत्सा गतिः स्मृता। अर्थौचित्यादिभिः सापि वागलङ्कार ईष्यते। अर्थौचित्यः व्याख्यानप्रसङ्गे उच्यते कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेवेत्यादि पदोपात्तबन्धोचिती द्रष्टव्या इति। प्रयोगव्यवस्थाया उपपादनसमये भोजदेवेनोक्तम् - यथामति यथाशक्ति यथौचित्यं यथारुचि। कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते। अत्र मतिर्व्युत्पत्तिः। तत्र शक्तिव्युत्पत्ती कवेरेव। औचित्यं तु पात्रस्यैव। वाग्भटस्य काव्यानुशासने रसाविघात केषु शब्ददोषेष्वनुचितार्थशब्ददोषः संलोचितः। पदे वाक्ये चानौचित्येन यत्प्रयुक्तं तदनुचितार्थम्। षोडश प्रकार केष्वर्थदोषेषु भिन्नसहचरत्वमुल्लेखनीयम्। तत्रोचित सहचारिभेदस्य कथोल्लिखिता। समालङ्कारस्य स्वरूपनिर्णयसमये औचित्यं समाहृतम्। पुनश्च स्त्रीणा मष्टावस्थावर्णना प्रसङ्गे वासकसज्जाया लक्षणं लक्षितम्- ‘उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा।’ आनन्दवर्धनेन तस्य ध्वन्यालोके अलङ्कारौचित्य-ध्वन्यौचित्य-वृत्तौचित्य-संघटनौचित्य-प्रबन्धौचित्य-रसौचित्यादिरूपेण औचित्यस्य विभिन्नाः स्थितयः वर्गीकृताः। ध्वन्यालोकस्य तृतीय उद्योते तेन संघटनायाः स्वरूपोद्भावने मनोनिवेशः कृतः। तत्र औचित्यस्य आवश्यकता दृश्यते। संघटना त्रिविधा-असमासा, मध्यमेन समासेन भूषिता, दीर्घसमासा च। किन्तु अस्याः संघटनाया आश्रयः कः? नियामकः कः? कार्यं किम्? इत्येतद्विषये आनन्दवर्धनाचार्येण उक्तम् - गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा। रसान् तन्नियमे हेतुरौचित्यं वक्त्रिवाच्ययोः।। माधुर्यादिगुणाः भवन्ति आश्रयाः, रसद्योतनं तस्य कार्यम्, वक्त्रिवाच्ययोः औचित्यं तन्नियामकत्वम्। वक्त्रिवाच्ययोः औचित्याभावात् काव्यस्य रसप्रतीतौ अभावो जायते। यथा करुणविप्रलम्भ-शृङ्गारयोस्त्वसमासा संघटना, किन्तु अत्र दीर्घमध्यमसमासानां प्रयोगे वक्तृवाच्योः औचित्याभावात् ध्वन्यात्मभूतरसाभावात् न तु काव्यमास्वाद्यते।

पुनश्च रौद्ररसे मध्यमसमासस्य औचित्यम्। कथानायकः यदि धीरोद्धतो भवति तर्हि संघटना भवति दीर्घसमासा। धीरललिते च मध्यमसमासा। किन्तु अस्य नियमस्य अनौचित्यात् रसप्रतीतौ व्यवधायको भवति। वक्तृवाच्यगतौचित्ये सत्यपि संघटनायां विषयौचित्यस्य आवश्यकता वर्तते। विषयौचित्येनापि संघटना नियन्त्रिता भवन्ति।14 प्रबन्धवत् मुक्तकेष्वपि रसबन्धाभिनिवेशिनो भवन्ति कवयः। यथा - अमरुकवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। स्यन्दानितकादिषु विकटनिबन्धनौचित्यान्मध्यसमासादीर्घसमासे एव रचने। पर्यायबन्धे पुनः असमासामध्यमसमासे एव संघटने। इतिवृत्तस्य केवलविन्यासत्वात् रसाभिनिवेशस्य नात्यन्तम्। अतः स्वेच्छाचारः। कुलकादिनिबन्धनस्य आधिक्यात् दीर्घसमासायां खण्डकथासकलकथयोर्न विरोधः। अत्र रसानुसारं वृत्तौचित्यमनुसर्त्तव्यम्। सर्गबन्धे रसतात्पर्यात् यथा रसौचित्यम्। अभिनेयार्थे रसबन्धेऽभिनिवेशः कार्य्यः। आख्यायिकायां गद्यस्य गाड़बन्धाश्रयेण शोभाजनकत्वात् तस्य च प्रकृष्यमाणत्वात् भूम्नि मध्यमसमासादीर्घसमासे एव संघटने। कथायां गाड़बन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमनुसर्तव्यम्। यथा गद्यबन्धे विप्रलम्भशृङ्गारकरुणयोराख्यायिकां दीर्घसमासा न शोभते। अतो गुणसंघटनयोर्नियामकत्वं तावद्वक्तृवाच्यविषयौचित्यम्। एतदौचित्यत्रयं रसौचित्येन नियन्त्रितम्। रसबन्धोक्त मौचित्यं भाति सर्वत्र संश्रिता। रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत्। अस्याः कारिकायाः वृत्तावुक्तम्- ‘विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।’ अर्थात् विषयमूलकमौचित्यं रसमपेक्षते। विषयमूलकमौचित्यं रसौचित्यानुसारं गृहीतमगृहीतं वा। यथा - आख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनायाः दिगनुसर्त्तव्या। ननु प्रबन्धस्य व्यञ्जकत्वम्। प्रबन्धारसादीनां व्यञ्जकः। तस्य व्यञ्जकत्वे ‘पूर्वं हि कथा परीक्षा। तत्राधिकावापः फलपर्यन्तानयनं रसं प्रति जागरणं तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति।’ (लोचनटीका)। विभावानुभावसञ्चार्यौचित्यचारुणः कथाशरीरस्य प्रकाश एव विधिः। तत्र विभावौचित्यं तवत्प्रसिद्धम्। भावौचित्यं तावत्प्रकृतौचित्याद् भवति उत्तममध्यमाधमभावात् दिव्यमानुषादिभावाच्च प्रकृतौचित्यं विविधप्रकारकं भवति। यथायथ प्रकृत्यनुसारि स्थायिभावोपनिबन्धन मौचित्यानुसारि।15 रसानुकूलविषयस्य योजनं कर्तव्यम् इतिवृत्तविषयो यदि रसानुसारि न भवति तर्हि तं परित्यज्य रसानुसारिणः कल्पितविषयस्य प्रयोग एव समुचितः। एतेन न दोषः। शास्त्रसमापनेच्छया न रसाभिव्यक्तये सन्धिसन्ध्यङ्गानां योजनं कर्तव्यम्। काव्यस्य प्रयोजनानुसारं कुत्रचिद्रसस्योद्दीपनप्रशमनयोरभिनिवेशः कर्तव्यः।

अङ्गिरसाभिव्यक्तिं प्रति दृष्ट्यर्पणम्। कविः स्वशक्तिप्रदर्शनार्थं न रसादेरभिव्यक्तये औचित्यमूलकान् अलङ्कारादीन् योजयति।16 अतः प्रबन्धे प्रसिद्धानुसारमौचित्यबन्धस्य विन्यास एव रसस्य श्रेष्ठो निदर्शकः। तथा हि नाट्यशास्त्र आदिष्टं- ‘प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यक कर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति।’ औचित्योलङ्घनेन काव्यं उपहासास्पदं भवति। औचित्यविचारस्य प्रधानाभित्ति-भूमिस्तावदानन्दवर्धनस्य उक्तिरियम् - अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्। औचित्योपनिबन्धस्तु रसस्योपनिसत्परा।। रसहानेः प्रधानं कारणं तावदौचित्यम्। किन्तु रसस्फुरणस्य श्रेष्ठं माध्यमं औचित्यम्। अभिनवगुप्तस्य मते चेतने शरीरे कटककुण्डलादिवस्तु यथा शोभादायकं भवति तथा रसात्मके काव्येऽपि उपमाद्यलङ्काराः शोभां वर्धयन्ति। पतिशरीरे कटकादिवस्तु हास्यावहं भवति अनौचित्यत्वात्। काव्येऽपि तथावत्। राजशेखरकृतकाव्यमीमांसायां व्युत्पत्तिपाकयोर्विवेचनायामौचित्यस्य महत्त्वमुरीक्रियते। उचितानुचितयोर्ज्ञानाभावात्कवेर्व्युत्पत्तिर्न सम्भवति। तथा हि प्रोक्तम्- ‘उचितानुचितविवेको व्युत्पत्तिः।’ पुनश्च रसोचितशब्दाभावात्पाकोऽपि न स्यात्। कुन्तकस्य वक्रोक्तितावत् औचित्यसापेक्षम्। तेनोक्तम्- ‘तत्र पदस्य तावदौचित्यं वक्रतायाः परं रहस्यम्। उचिताभिधानजीवितत्वात्। वाच्यस्यप्येकदेशेहप्यौचित्यविरहात् तद्विदाह्लादकारित्वहानिः।’ (वक्रोक्तिजीवितस्य, प्रथम उन्मेषः)। कुन्तकेन तस्य काव्यलक्षणे शब्दार्थसम्बन्धस्य औचित्यमङ्गीकृतम्। हिन्दी वक्रोक्तिजीवित इति ग्रन्थस्य भूमिकांशे डॉ. नागेन्द्रेण लिखितम् - ‘इस विवेचन से स्पष्ट है कि साहित्य का अर्थ है- शब्द और अर्थ का उचित सहभाव अथवा सम्बन्ध; और कुन्तक ने प्रथम उन्मेष की सप्तमी कारिका की वृत्ति में अनेक प्रकार से शब्द अर्थ सम्बन्ध के इसी साहित्य का अत्यन्त मर्मिक आख्यान किया है ।’ (पृ. 210, हिन्दी अनुसन्धान् परिषद् ग्रन्थमाला, ग्रन्थः - 5, दिल्ली))। कुन्तकस्य मते औचित्यं तावत् गुणविशेषकम् तन्मते प्रत्येकं मार्गस्य सामान्यगुणद्वयं विशेषगुणचतुष्टयञ्च विद्येते तथा हि उदितम् - एतत्त्रिष्वपि मार्गेषु गुणद्वितयमुज्ज्वलम्। पदवाक्यप्रबन्धानां व्यापकत्वेन वर्तते। एतद्गुण द्वितीय मौचित्य सौभाग्याभिधानम् उज्ज्वलम् अतीव भ्राजिष्णु पदवाक्यप्रबन्धानां त्रयाणामपि व्याकत्वेन त्रिषु मार्गेषु वर्तते सकलावयवव्याप्त्यावतिष्ठते। इदमौचित्यं सम्पूर्णस्य काव्यस्य सम्पद्विशेषकम्। तथा हि उच्यते - आञ्जसेन स्वभावस्य महत्त्वं येन पेष्यते। प्रकारेण तदौचित्यमुचिताख्यानजीवितम्।

## ‘आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः’

नाट्यशास्त्रे चतुर्विधानामभिनयानां विवरणमुपलभ्यते। तेषु आहार्याभिनयः अन्यतमः। नाट्यशास्त्रस्य एकविंशतितमेऽध्याये आहार्याभिनयस्य विस्तृतं विवरणं उपलभ्यते । तदनुसृत्य अस्मिन् शोधलेखे विमर्शा कृता। अहार्याभिनयः इत्यस्य कोऽर्थः, आहार्याभिनयः इति नाम कथमायातः, नाट्ये अस्याभिनयस्य महत्त्वं किम्?, पुस्तः अलङ्कारः अङ्गरचना सज्जीवञ्चेति आहार्याभिनयस्य चातुर्विध्यम् च चर्चिताः अत्र। सन्धिमः व्याजिमः वेष्टिमश्चेति त्रिविधः पुस्तः अपि च माल्यम्, आभरणं, वासांसि चेति त्रिविधः अलङ्कारः विवरीताः। अङ्गरचनायां स्वभावजानां वर्णानां विवरणमपि च वर्णानां संयोगेन उपवर्णानामुत्पत्तिः कथमिति उक्तः। चतुष्पदः, द्विपदः, अपदश्चेति त्रिविधः सज्जीवम् उक्तः। अन्ते नाट्ये युद्धस्याभिनये उपयुज्यमानानां आयुधानां विषयः, अन्येषां नाट्योपकरणानां विषयश्च चर्चितः प्रमुखाः शब्दाः-आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यः, पुस्तः, अलङ्कारः, अङ्गरचना, सज्जीवः सज्जीवं वा, नेपथ्यविधिः, सन्धिमः, व्याजिमः, वेष्टिमः, अभिनयः। भरतमुनिः नाट्यशास्त्रस्य अष्टमेऽध्याये आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यश्चेति चतुर्विधः अभिनयः इति वक्ति। तदेवम् - आङ्गिको वाचिकश्चैव ह्यहार्यः सात्त्विकोऽपरः। ज्ञेयास्त्वभिनयो विप्राः चतुर्धा परिकल्पितः। तत्र नेपथ्यजो विधिः अर्थात् नेपथ्ये पात्रानुसारेण क्रियमाणः वेषभूषणादि-विधिः आहार्याभिनयः इति कथ्यते। नाट्यस्य शुभं ये इच्छन्ति ते नेपथ्यविधौ प्रयत्नं अवश्यमेव कुर्युः। तदुक्तं भरतमुनिना -

आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः। तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता। आङ् इत्युपसर्गपूर्वकस्य ‘हृञ्-हरणे’ इति धातोः ण्यत् प्रत्ययेन निष्पन्नः आहार्यशब्दः। आहरणीय इत्यर्थः कोशेषु3 दृश्यते। मुखवर्णिका-वेषभूषादयः आहार्याभिनयाः रङ्गे प्रदर्श्यन्ते न तु क्रियन्ते। अतः नेपथ्ये कृत्वा रङ्गं प्रति आहरणीयः इत्यर्थे आहार्याभिनयः इति शब्दः आयातः। नेपथ्यविधिमपि स्वतः नटः एव करोति इति नास्ति। कर्नाटकस्य यक्षगानकलायां नेपथ्यविधिमपि नटः एव करोति। भरतनाट्यादिष्वपि एवमेव दृश्यते। किन्तु नाटकादिषु प्रायः अन्येषां साहाय्येनैव नेपथ्यविधिः क्रियते। अर्थात् अन्येषां साहाय्येनापि आहार्याभिनयः कार्यः भवति। अतः अन्येषां साहाय्येन क्रियमाणः नेपथ्यविधिः अभिनये किमर्थमन्तर्भवति इति चेत्; उच्यते- रावणस्य पात्रवारी एकः रामवत् वेषभूषादिकं धृत्वा उत्तमम् अभिनयं करोति चेदपि रसनिष्पत्तिः न सम्भवति अपि च रसाभासः सञ्जायते। किन्तु आहार्यः सम्यग्वर्तते चेत् अङ्गाद्यभिनयाः सम्यक् शोभन्ते रसानुभूतिश्च जायते। अतः एव सर्वे प्रयोगाः आहार्याभिनये स्थिताः। आहार्यः सम्यग्वर्तते चेत् आङ्गिकवाचिकसात्त्विकाभिनयाः अयत्नतः4 सिद्ध्यतीत्युक्तं भरतमुनिना। तदेवम्- आहार्याभिनयं विप्रा व्याख्यास्याम्यनुपूर्वशः। यस्मात् प्रयोगः सर्वोऽयमाहार्याभिनये स्थितः। नानावस्थाः प्रकृतयः पूर्वं नेपथ्यसाधिताः। अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः। अतः सिद्धिमिच्छन्तः नेपथ्ये यत्नं कुर्युः यतो हि नेपथ्यं नाट्यस्यैव अलङ्कारं वर्तते इत्यप्युक्तम्। तदेवम् - तस्मिन् यत्नस्तु कर्तव्यो नैपथ्ये सिद्धिमिच्छता।

नाट्यस्येह त्वलङ्कारो नैपथ्ये यत्प्रकीर्तितम्। नन्दिकेश्वरः अभिनयदर्पणे अहार्याभिनयस्य लक्षणमात्रं वक्ति। तदेवम् - ‘आहर्यो हारकेयूरवेषादिभिरलङ्कृतिः।7 इति। अत्र आदिशब्देन अङ्गरचना, आयुधानि, प्रतिशिरस् च ग्राह्याः। वेष इत्युक्ते आभरण-प्रतिशिरश्चादीनि अपि च अलङ्कृतिः इति शब्देन नेपथ्ये क्रियमाणकार्याणि ज्ञेयानि। अतः ‘‘आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः’’ इति भरतोक्तलक्षणं नन्दिकेश्वरेणापि अनुसृतमिति स्पष्टं भवति। भरतेन नाट्यशास्त्रे आहार्याभिनयविषये उक्तविवरणं समालोच्यतेऽत्र। नाट्यशास्त्रे एकविंशतितमेऽध्यायः पूर्णतया अहार्याभिनय विवरणार्थमेव अस्ति। तत्र भरतमुनिः अहार्याभिनयः पुस्तः, अलङ्कारः, अङ्गरचना, सज्जीवञ्चेति चतुर्विधः इति वक्ति। तदेवम् - चतुर्विधं तु नेपथ्यं पुस्तोलङ्कार एव च। तथाङ्गरचना चैव ज्ञेयं सज्जीवमेव च। 2.1.1. पुस्तः - शैलाः, यानानि, विमनानि, चर्मनिर्मितवस्तूनि, वर्मानि अर्थात् कवचानि, ध्वजाः, गजाः इत्यादीनि नाट्ये उपयुज्यमानानि वस्तूनि पुस्ताः।10 तदुक्तमेवम् - शैलयानविमानानि चर्मवर्मध्वजा नगाः। ये क्रियन्ते हि नाट्ये तु स पुस्त इति संज्ञितः। तादृशः पुस्तः त्रिविधः। सन्धिमः व्याजिमः वेष्टिमश्चेति। 1. सन्धिमः - किलिञ्जेन12, चर्मणा, वस्त्राद्यैश्च क्रियमाणं रूपविशेषः सन्धिमः। 2. व्याजिमः - यन्त्रेण13 क्रियमाणः रूपविशेषः व्याजिमः। 3. वेष्टिमः - यद्रूपं वेष्ट्यते सः वेष्टिमः इति। अलङ्कारः त्रिविधः माल्यम्, आभरणं, वासांसि चेति। 1. माल्यं पञ्चविधं वेष्टिमं, विततं, सङ्घात्यं, ग्रन्थिमं, प्रलम्बितं चेति। आभरणं तु चतुर्विधम् आवेध्यं, बन्धनीयं, क्षेप्यम्, आरोप्यञ्चेति।

# ‘निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या’

काव्यं नाम सद्यविगलितवेद्यान्तरानन्दास्वादनम्। तच्च काव्यमधिकं रमणीयमुपादेयमानन्ददायकञ्च भवति गुणालङ्काररसरूपकाव्यतत्त्वसंज्ञानेन। काव्यालङ्कारकाव्य प्रकाशसाहित्यदर्पणादि काव्यतत्त्वग्रन्थपरिशीलनेन काव्येषु सुतरां व्युत्पत्तिः विपश्चिताम्। तादृशेषु काव्यतत्त्वग्रन्थेषु सम्मानीयः खलु भोजनरेन्द्रप्रणीतः शृङ्गारप्रकाशः। सत्यपि प्रसिद्धौ काव्यतत्त्वग्रन्थरूपेण ग्रन्थस्यास्य व्याकरणतत्त्वालोचनरूपं किञ्चन वैशिष्ट्यम् विशेषतां विदधाति विद्वत्संसदि। कारकसमासादिवहुविधानि व्याकरणतत्त्वान्यत्र सुसंहितानि। तत्र शब्दार्थौ सहितौ काव्यमिति लक्षणान्तर्गतयोः शब्दार्थयोः व्याख्यानावसरे तद्विभागनिरूपणे च प्रातिपदिकार्थः समुपवर्णितः। द्वादशविधशब्दानां द्वादशविधेष्वर्थेषु अन्यतमोऽयं प्रातिपदिकार्थः। वैयाकरणानां प्रातिपदिकार्थविभाजनाद् भोजनरेन्द्रस्य प्रातिपदिकविभाजनमुत्कृष्टं सुकल्पितञ्च। यद्यपि प्रातिपदिकस्यैका मौलिकसंज्ञा प्रदत्ता, तथापि प्रातिपदिकार्थस्य संज्ञावैशिष्ट्यादिकं किमपि नोच्यते। परं तस्य सुस्पष्टविभाजनं तेन कृतम्। लिङ्गं नाम तृतीय प्रातिपदिकस्य विभागवर्णने स्त्रीलिङ्गस्य कापि संज्ञा न प्रदत्ता। तथापि शुद्धादिविभागानामुदाहरणरूपेण सर्वदैव स्त्रीलिङ्गस्य प्राधान्यं स्वीकृतम्। अतः स्त्रीलिङ्गवाचकशब्दानामुदाहरणं प्रारम्भे एव प्रदत्तम्। स्वरूपमनुकार्यश्चेति स्वार्थप्रातिपदिकस्य दृष्टान्तः श्लोकेन समुल्लिखितः। पुनश्च अनाश्रयरूपप्रातिपदिकार्थस्योदाहरणं प्रसिद्धशास्त्रेषु प्रदत्तम्। अन्तिमे भावस्यापि विवेचनं समाम्नातम्। भोजनरेन्द्रकृतस्य प्रातिप्रातिपदिकार्थस्य विभाजनं सुतरां वैज्ञानिकं वर्तते। परन्तु बहुषु स्थानेषु समुचितसंज्ञाभावात्तस्य सार्थकता न विद्यते।

प्रमुखाः शब्दाः शब्दः, अर्थः, प्रातिपदिकम्, प्रातिपदिकार्थः, प्रकृतिः, प्रत्ययः, समासः, नियतोपस्थितिः, स्वार्थः, द्रव्यम्, लिङ्गम्, स्वरूपम्, अनुकार्यम्, द्रव्यम्, लिङ्गम्, आश्रयरूपम्, अनाश्रयरूपम्, शुद्धम्, मिश्रम्, सङ्कीर्णम्, उपसर्जनम्, आविष्टम्, अव्यक्तम्, गुण, परिमाणम्, सम्बन्ध इत्यादयः। सरस्वता कण्ठाभरणस्य श्रीमद्भोजनरेन्द्रस्य विरचितः साहित्यप्रकाशो नाम शृङ्गारप्रकाशः खलु संस्कृतकाव्यशास्त्रस्योत्कृष्टो ग्रन्थः। न केवलं काव्यशास्त्रस्य मुख्यवेदाङ्गस्य व्याकरणस्याप्यालोचनात्मकोऽयं ग्रन्थः। एतादृशे प्रौढग्रन्थे षट्-त्रिंशत् प्रकाशा विद्यन्ते। तत्र प्रथमप्रकाशे काव्यलक्षणविमर्शकाले ग्रन्थकृतोच्यते- काव्यं शब्दार्थयोः साहित्यमामनन्ति। तद्यथा ‘शब्दार्थौ सहितौ काव्यम्’1 इति।’ तत्र येनोच्चारितेनार्थः प्रतीयते स शब्दः।2 अयं शब्दः द्वादशधा।3 पुनः यः शब्देन प्रत्याय्यते स चार्थोऽपि द्वादशधा- 1. क्रिया 2. कालः 3. कारकम् 4. पुरुषः 5. उपाधिः 6. प्रधानम् 7. उपस्कारार्थः 8. प्रातिपदिकार्थः 9. विभक्त्यर्थः 10. वृत्यर्थः 11. पदार्थः 12. वाक्यार्थः इति। एवं शब्दार्थयोः सम्बन्धोऽपि द्वादशधा4 यस्तु साहित्यपदवाच्यः।काव्यस्यात्मा शब्दार्थावेव। भोजनरेन्द्रेण तयोः शब्दार्थयोर्बहुधा विभाजनं कृतं। तत्र द्वादशधा शब्दाः पुनर्द्वादशधार्था विद्यन्ते। द्वादशविधेष्वर्थेष्वन्यतमः खलु प्रातिपदिकार्थः। शृङ्गारप्रकाशग्रन्थस्य चतुर्थप्रकाशे क्रिया-काल-कारक-पुरुषाणामर्थानाम्, पञ्चमप्रकाशे उपाधि-प्रधान-उपस्कारार्थ-प्रातिपदिकार्थानाम्, षष्टप्रकाशे च विभक्त्यर्थ-वृत्यर्थ-पदार्थ-वाक्यार्थानां सम्यग्विचारः कृतः। अतएव पञ्चमप्रकाशे उपाधिः प्रधानम्, उपस्कारार्थश्चैतेषामालोचनानन्तरमेव प्रातिपदिकार्थस्य विमर्शनं कृतं तत्र भवता भोजराजेन। अनेन प्रमीयते यत् काव्यात्मभूतस्य शब्दार्थयोरर्थस्य विभाजनप्रसङ्गे ग्रन्थकृतोच्यते प्रातिपदिकार्थस्वरूपम्। अथवा शब्दार्थमयस्य काव्यस्य ‘कोऽयमर्थः’ इति प्रश्नस्योत्तर विवेचने द्वादशविधार्थव्याख्यानकाले प्रातिपदिकार्थस्य विचारः कृतः इति। प्रातिपदिक स्वरूपम् द्वादशधा शब्देषु प्रकृतिः अन्यतमा। सा च प्रकृतिः पुनस्त्रिधा- धातुरूपा, प्रत्ययरूपा, प्रातिपदिकरूपा च। तत्र प्रातिपदिकरूपप्रकृतेरालोचनायां कविना प्रातिपदिकस्य संज्ञा प्रदत्ता- ‘‘नामाव्ययानुकरणकृत्तद्धितसमासाः प्रातिपदिकानि’’ इति। उक्तं चाष्टाध्याय्याम् - ‘अर्थवदधातुर प्रत्ययः प्रातिपदिकम्’ (1.2.45), ‘कृत्तद्धितसमासाश्च’ (1.4.46) इति। वार्तिककारेण महर्षिणा कात्यायनेनापि प्रातिपदिकविषये उक्तम्- ‘निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या’6 इति। तत्रार्थवद्ग्रहणेन नामाव्ययानुकरणानि गृह्यन्ते। कृत्तद्धितसमासास्तु कण्ठोक्त्या। नन्वेतेऽप्यर्थवन्त एव। किन्तु कृत्तद्धिताश्च प्रत्ययाः, तेषामप्रातिपदिकग्रहणात् प्रातिपदिकसंज्ञा न प्राप्नोतीति कृत्तद्धितग्रहणेन तदुपसंगृह्णाति। समासग्रहणेन त्वर्थवत्समुदायस्य समासस्यैव प्रातिपदिकसंज्ञेति ज्ञापयन् तथाविधस्य वाक्यस्यैतां निवर्तयति। प्रातिपदिक विभाजनम् प्रातिपदिकानि हि नाम-अव्यय-अनुकरण-कृत्तद्धित-समासभेदातषट्7 प्रकाराः।

1. नामप्रातिपदिकम् - तत्र अनपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि। तानि द्विधा - आविष्टलिङ्गानि अनाविष्टलिङ्गानि च।
2. अव्ययप्रातिपदिकम् - प्रायेणाऽलिङ्ग संख्याशक्तीन्यव्ययानि। तानि षोढा-अव्यय-निपात-गत्युपसर्ग-कर्मप्रवचनीय- विभक्ति प्रतिरूप भेदात्।
3. अनुकरणप्रातिपदिकम् - शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्। तदपि षोढा- व्यक्तवर्णसादृश्योक्तिः, व्यक्तपदसादृश्योक्तिः, व्यक्तवाक्यसादृश्योक्तिः, अव्यक्तवर्णसादृश्योक्तिः, अव्यक्तपदसादृश्योक्तिः, अव्यक्तवाक्यसादृश्योक्तिश्च।
4. कृत्प्रातिपदिकम् - भावकारकाभिधायिनो धातुप्रत्ययाः कृतः। ते षोढा- लिङ्गिनः, अन्यलिङ्गिनः, स्वलिङ्गिनः, अलिङ्गिनः, शक्त्याद्यपेक्षिणः, अनुप्रयोगाद्यपेक्षिणश्च।
5. तद्धितप्रातिपदिकम् - भावकारक संबन्धि स्वार्थाभिधायिनोऽधातु प्रत्ययास्तद्धिताः। ते षोढा- अलोपिनः, लोपिनः, सर्वलोपिनः, आदेशिनः, प्रदेशिनः, अप्रदेशिनश्चेति।
6. समासप्रातिपदिकम् - पृथगर्थानामेकार्थीभावः समासः। तेऽपि षोढा- सुबन्ताभ्याम्, तिङन्ताभ्याम्, सुप्तिङन्ताभ्याम्, सुब्धातुभ्याम्, सुबन्तनामभ्याम्, नामभ्याञ्चेति। अत्रोल्लेखनीयं यत् प्रत्ययस्य विभाजनेऽपि भोजनरेन्द्रेण प्रातिपदिकमुक्तम्। तत्र प्रातिपदिकानि तु प्रत्ययरूपाणि। अतएवोक्तं ‘प्रातिपदिकप्रत्ययाः’ इति। ते यथा- टाबादयः (खट्वा, सुदामा) स्वादयः (कुण्डम्, कुण्डे) तसिलादयः (यतः, अतः) कादयः (अश्वकः, कुटीरः) अणादयः (औपगवः, तावकीनः) क्यजादयश्च (चित्रीयते, पुत्रकाम्यति) इति। पुनः ग्रन्थस्य प्रातिपदिकप्रकाशनामधेये द्वितीयप्रकाशे प्रातिपदिकं त्रिधा विभज्यते। तद्यथा-

1. विभक्तावयवम् 2. अविभक्तावयवम् 3. अनुकरणं चेति। तत्र विभक्तावयवं पुनस्त्रिधा - कृद्रूपं, तद्धितरूपं, समासरूपं च। अविभक्तावयवं प्रातिपदिकमपि त्रिधा- नामरूपम्, अव्ययरूपम्, निपातरूपं च। अनुकरणप्रातिपदिकमपि त्रिधा- साध्वनुकरणम्, असाध्वनुकरणम्, अव्यक्तानुकरणं च। वस्तुतस्त्वत्रोक्तं विभाजनं पूर्वोक्तनामाव्ययादिषट्-विभागस्य समानमेव। केवलं निपातरूपा विभक्ता वयवप्रातिपदिकमतिरिक्तं यस्य वर्णनं पूर्वं न कृतम्। तदपि त्रिधैव - स्वतन्त्राः, परतन्त्राः, विशेषपरतन्त्राश्च। प्रातिपदिकविभाजनविषये ग्रन्थस्यान्तिमे भोजेन श्लोकोऽयमुक्तः- प्रकृतिप्रत्ययौ त्रेधा त्रिधोपस्कारभक्तयः।

त्रिधैवोपपदप्रातिपदिकानां विभक्तयः। उपाध्याद्यर्थ चतुष्टय प्रकाशे क्रमेण उपाधिः प्रधानम्, उपस्कारार्थं, प्रातिपदिकार्थः इत्येतेषां विस्तृतव्याख्या प्रदत्ता। तत्र प्रातिपदिकार्थस्य व्याख्या अन्ततः कृता। प्रातिपदिकस्य अर्थः प्रातिपदिकार्थः। ‘प्रातिपदिकार्थः सत्ता’ इति काशिकायाम्। पुनः सिद्धान्तकौमुद्यां दीक्षितेनोच्यते- ‘नियतोपस्थितिकः प्रातिपदिकार्थः।’ यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः। नियतोपस्थितिकः इति पदस्यार्थो बालमनोरमायाम्- ‘नियता उपस्थितिर्यस्येति विग्रहः। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः।’ ननु ‘प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः’, ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं चेति त्रिकं प्रातिपदिकार्थः’ ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं संख्या चेति चतुष्कं प्रातिपदिकार्थः’, ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं सङ्ख्या कारकं चेति पञ्चकं प्रातिपदिकार्थः’ इत्येते पक्षा ‘सरूपाणामेकशेष एकविभक्तौ’, ‘स्त्रियाम्’ इत्यादिसूत्रेषु भाष्ये स्थिता मञ्जूषायां प्रपञ्चिताश्च। किं नाम प्रातिपदिकम्? नामाव्ययानुकरणकृत्-तद्धित-समासाः प्रातिपदिकानि। अर्थात् नामप्रातिपदिकम्, अव्यय प्रातिपदिकम्, अनुकरणप्रातिपदिकम् कृत्प्रातिप दिकम्, तद्धितप्रातिपदिकम्, समासारपि प्रातिपदिकम्।

## ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते’

अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भवभूतिना उक्तम् ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः’ अर्थात् यस्य जीवने सङ्गीतकला नास्ति तस्य जीवनं व्यर्थमेव प्रतिभाति। अतः ‘कं सुखमलातीतिकला’ अनया व्युत्पत्तया एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारो कलैव अस्ति। यस्य जीवने कला नास्ति सः पशुवत् जीवनं यापयति। मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित षोड़शकलानाम् चतुषष्टिः कलानाञ्चवर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिः कलानाम् वर्णनम् अक्रियत्। ‘ईश्वर अंश जीव अविनाशी चेतन अमल सहज सुखराशि’ अस्याम् पृथिव्याम् मानवाः भावाभिव्यक्तये ध्वनेः प्रयोगम् अकुर्वन्। क्रमेण सैव ध्वनिः नादशब्देन व्यवहृतः। सैव नादः शब्दरूपेन परिणतो भूत्वा अर्थस्य ग्रहणम् कृतः। तदा शब्दार्थौ सम्मिल्य कवयः वाक्व्यवहारं कृतवन्तः। पुनश्च अयमेव वाक्व्यवहारः भाषाकाव्यसाहित्यसङ्गीतमाध्यमेन मनुष्यान् मनोरञ्जितः। अयमेव मानवसंस्कृतेः उपादानमस्ति। नद्यते इति नादः। न-कार शब्देन प्राणसङ्गकः द-कार शब्देन अग्निसङ्गकः इति अववोध्यते। प्राणाग्नयोः समुद्भूत एषः नादः। आहतानाहतभेदाभ्यां नादः द्विविधः। आहतनादेव सङ्गीतस्य व्युत्पत्तिकारकः। पुरातत्त्वानुसारेण सङ्गीतकलाया उद्भवः स्वयम्भूः परमेश्वरात् अभवत्। नटराजशिवेव नृत्यकलायाः आदिस्रोतमस्ति। भगवती सरस्वती गीतवाद्यकलयोः स्त्रष्टा। यद्यपि नाट्यशास्त्रानुसारेण ब्रह्मैव सङ्गीतकलायाः जनकः वर्तते। अस्मिन् शोधप्रबन्धे सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारितः। तदेव अनुसृत्य किञ्चित् उच्यते सङ्गीत इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक् गीयते इति सङ्गीतः। यथा उक्तं सङ्गीतरत्नाकारेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते’। गीतं नाटकस्याङ्गमितिनाट्यशास्त्रकारेणोक्तम् तस्यानुगामी वादनं नर्तनं च। मनुसंहितायाम् सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्य व्यवहारम् नृत्यगीतादि स्थाने दरीदृश्यते। अर्थशास्त्रे विष्णुपुराणे बौद्धजैनग्रन्थेऽपि च सङ्गीतशब्देन गीतं वाद्यं नृत्यं त्रयं च अवबोध्यते। वायुपुराण नाट्यशास्त्ररामायणमहाभारतप्रभृतिषु ग्रन्थेषु गान्धर्वविद्या रूपेण सङ्गीतं व्यवहृतम्।‘का नाम कला’ इत्यत्र प्रतीच्यः प्रधीवरो बैडले वदति ‘‘कला वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षी भवति सा सुघटितयथार्थ वैशिष्ट्याभिव्यञ्जनकारिणी क्षमता ‘कला’ इत्यनेन नाम्ना प्रोक्ता भवति।’’ अतः ‘कं सुखं लातीति कला’ - अनया व्युत्पत्या एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारः कलैव अस्ति। यस्य जीवने कला नास्ति स पशुवत् जीवनं यापयति। कला परमानन्दस्य प्राप्तेः साधनमस्ति। यथोच्यते ‘‘लीयते परमानन्देययात्मा सा परा कला’’ मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित् षोड़शकलानाम् चतुःषष्टिकलानाञ्च वर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिकलानाम् वर्णनम् अक्रियत।

# अमृतवाणी गीतातत्वार्थ बोधः

**गीता ज्ञानप्रियः सदा सुखी भवति।**



शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

॥ संगीतं मोक्षदायकम् ॥
संगीतममलं शास्त्रं सामवेदान्निगद्यते।
ब्रह्मणा च पुरा प्रोक्तं
संगीतं मोक्षदायकम् ॥
( स्वरचितोत्र्यं श्लोकः ) अपि च- द्रुहिणेन
यदन्विष्टं प्रयुक्तं भरतेन च। महादेवस्य पुरतस्तन्
मार्गाख्यं विमुक्तदम्॥ ( संगीत दर्पणात् )

**हिन्द्यामस्यार्थः-** ब्रह्मा (द्रुहिण)ने जिस संगीत कोङ ङशोध कर निकाला,भरत मुनि ने महादेव के सामने जि-सका प्रयोग किया तथा जो मुक्तदायक है ,वह मार्गी संगीत कहलाता है।

**संगीतंसाधनासामर्थ्यात् संगीत साधका अपि ब्रह्म-साक्षात्कारकर्तुं समर्थाः भवतुमर्हन्ति ।**

वस्तुतस्तु संगीतं सकलजीवानां प्रसन्नतायाः मूलसाधनं वर्तते। संगीतगायनं विना निरक्षराः साक्षराश्च क्षणमपि न जीवितुं शक्नुवन्ति। मानवेतराः जीवा अपि संगीतगान-माश्रित्यैव जीवन्ति। संगीतं स्वास्थ्यकारकमपि कथ्यते। संगीतं प्राणिनां जीवनम्। साहित्यसंगीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः अपि च गीतायामपि भगवता कृष्णेनोक्तं यत्-क्ष्वेदानां सामवेदोत्रस्मिक्ष तस्मात् श्रीकृष्णोत्रपि संगीतस्वरूपत्वात् संगीतावतारःमुक्तिभुक्तिभक्तिकारकश्च मन्यते। ज्ञानस्य क्षेत्रा णि ,व्यापकानि .सन्ति।यथा न्यायव्याकरण- धर्मशास्त्रादिषु ग्रन्थेषु ज्ञानस्य गांभीर्यं दृश्यते तथैव. शास्त्रीयसंगीतेत्रपि संगीतज्ञानस्य. गांभीर्यं द्रष्टुं. शक्यते।संगीतज्ञानान्यप्यनन्तानि भवन्ति । न्यायव्याकरणादिज्ञानं स्थिते सति मनुष्यःसंगीतशास्त्रस्यङ ज्ञानाभावत्वात् तस्मिन् क्षेत्रेऽज्ञानी भवति।संगीतशास्त्रस्य ज्ञानमपि ब्रह्मसाक्षात्कारकारणमस्ति ।अस्य . ज्ञानस्य गरुपरम्परापि भगवतःनारायणादेव समुत्पन्ना।ना-रदादयःसर्वे. ऋषयःसंगीतविद्यामाध्यमेनैवङ ङईश्वरं प्रकटयति स्म। आधुनिक युगेपि सूरतुलसी मीराकबीरा-विवेकादयः संगीत विद्याबलादेव ब्रह्मदर्शनं कर्तुङ सफलाःअभवन् । इदानीमपि जगद्गुरु श्रीरामभद्राचार्य सदृशाः शास्त्रमर्मज्ञाः संगीतशास्त्रस्यापि विद्वांसः सन्ति। अपि च संगीतमाध्यमेनैव व्याख्यानं ददाति ते ज्ञानदुर्बलाः नहि सन्ति। अत एव कदाप्यित्थं न कथनीयं यत् संगीतज्ञाः ज्ञानदुर्बलाः भवन्ति। तेषांङ संगीतसाधकानां कृते महानपराधःभवितुं शक्यते । सामान्य संगीतज्ञानां कृतेत्रपि कथनं न समीचीनम् । स्वामी पराङ्कुशाचार्यमहापुरुषा अपि संगीतविद्यायाः पारङ्गताः आसन्ङ गपरं न तेत्र्यशासत्रेषु दुर्बलाः। संगीतं न जानन्नपि विद्वांसः संगी-तलयमाश्रित्यैव श्लोकानां हिन्दीपद्यानां च गानं कुर्वन्ति। एतदर्थं संगीतज्ञानं नेतर ज्ञानदुर्बलत्वं प्रति कारणम्।

# ।।गीतोपनिषद् ज्ञानामृतं।।



गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

गीताज्ञानतत्वसंचरण। युक्ततमा मताः।कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण गीताज्ञान मद्भुतं विशिष्टञ्च विद्यते साक्षात् पूर्णावतारकृष्ण प्रतिपादिता। तत्र न सन्देहः न तत्र स्वाग्रासरणावाकासः। भगवतः सन्देशःगृहीतव्यः। जीवेन न तत्र स्वचातुर्यं प्रसारणीयं। गीताज्ञान बोध लाभाय प्रामाणिकं भाष्यमनु सरणीयं। पूर्ण कृष्ण कृपापरिधौ विवेकः प्रापणीयः।तदनुसारं वदनं कृष्ण गीता भावं प्राप्स्यति। गीतायाः द्वादशोऽध्यायः महत्वपूर्णः। विशेषरूपेण भक्तिभावावबोधनाय।

अर्जुनः पृच्छति ये भक्ताः त्वां पर्युपासते ये चाप्यक्षरमव्यक्तमुपासते इत्यनयोः के योगवित्त-माः भगवान् स्वयंमेवोत्तरति यथा मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः। गीताज्ञान सर्वात्मना निरन्तरं मां अनन्त कल्याण गुणगणनिकेतनं भजन्ते। येषां केवलं मनस्संचरणं मय्येव भवतु परमश्रद्धयोपेताः भूत्वा मामेव मन्यन्ते ते एव श्रेष्ठाः। ।भक्तियोगमाश्रित्य ये जीवनं यापयन्ति ते युक्ततमाः। भक्तियोगे सर्वतस्सौलभ्यं भवति। भक्तियोगे तु भगवति एव सर्वाभारः। भक्ताः प्रभोः सम्पूर्णं विश्वासं कृत्वा कृपावलम्बकाः सन्तः जीवन्ति। यथा माता शिशुं रक्षयति पालयति निभालयति तथैव भक्तान् दीनदयालवः दीनवन्धवश्च परमेश्वराः रक्षयन्ति।

**। विमलः हिन्दीभावानुवादः।**

आत्मकल्याण केलिए निस्सृत गीताज्ञान सर्वतः सक्षम है। पूर्ण प्रभु काअसन्दिग्ध अनुभूत ज्ञान है। गीता के 12अध्याय में ज्ञानयोग तथा भक्ति योग के आभ्यंतरिक तुलनात्मक स्वरूप का अति सूक्ष्म दार्शनिक तथा व्यावहारिक विवेचन है। सां-सारिक मुक्ति दोनों में संभव है। परन्तु
ज्ञान योग में अखण्ड रस।
भक्ति योग में अनन्त रस ।
ज्ञान योग में आत्म परमात्म भेद,दूरी तो मिट जाती है, परन्तु अभिन्नता नहीं मिट पाती है। । वहीं भक्तियोग में भेद, दूरी तथा अभिन्नता सब समाप्त हो जाती है। भक्त पूर्ण रूप से प्रभु पर निर्भर रहता है। भक्त योग में ईश्वर के अतिरिक्त किसी की सत्ता नहीं होती है। भक्त सांसारिकसर्वस्वत्यागकरमात्रप्रभुकेलिए जीवनोपयोग करता है।इसलिए ईश्वर के साथ भक्त अभिन्न हो जाता है।अभिन्नता का वास प्रेम में है। अर्थात् प्रभु प्रेम ही भक्ति है। प्रेम में नियम नहीं होता है। नियम बन्धन से प्रेम अनन्त गुणा श्रेष्ठ है। प्रेम में मात्र मन का समर्पण होता है। मन का चिन्तन केन्द्र मात्र प्रेमास्पद प्रभु होता है। तब विलक्षण परिवर्तन होता है। वह यह कि प्रभु काइष्ट भक्त हो जाता है। परम प्रभु सर्वदा सर्वथा केलिए भक्ताधीन हो जा-ते हैं। तात्पर्य यह कि ज्ञान की एकता से भक्ति की एकता श्रेष्ठ होती है भक्ति की एकता में सर्ववाद अस्तित्व हीन हो जाता है। प्रेमी भक्तों के रक्षण,भरण,पोषण, निर्मलीकरण का सम्पूर्ण उत्तरदायित्व प्रभु का होता है। भक्त केलिए एक ही अनुबंध है प्रभुप्रेम।जैसा कि गोस्वामीजी ने कहा प्रेम भक्ति जल विनु रघुराई।। अभिअंतर मल कबहुं न जाई। ज्ञान योग में मुक्ति की प्रधानता है। परन्तु 'प्रेम 'मुक्ति,तत्वज्ञान ,स्वरुपबोध,आत्मसाक्षात्कार,केवल्य, से अधिकाधिक श्रेष्ठ है। ज्ञान की परिपक्वावस्था प्रेम है। ज्ञान भेद कारक होता है। प्रेम अभेदकारक होता है। प्रेम ज्ञान सार तत्व है। ज्ञान झूठ हो सकता है। प्रेम कभी झूठ नहीं होता। कपटता देर सबेर प्रकट हो ही जाती है। प्रेम कपट सहन नहीं कर सकता है। प्रेमरस प्रतिक्षण वर्द्धमान अनन्त रस है। वह सर्वथा आत्मनिष्ठ होताहै। शरीर सम्बन्ध का वहाँ अस्तित्व नहीं है। वह तो राग है। प्रेम रस से लोक परलोक को रसासिक्त कर मानव जीवन को सार्थक करें।

# हरिभक्तः प्रह्लादः

**प्रदीपनाथः, असमराज्यम्**

प्रह्लादः दैत्यकुले जन्म अलभत। तस्य मातापितरौ दैत्यौ आस्ताम्। दैत्यकुले जन्म लब्ध्वा अपि सः भगवतः विष्णोः महान् भक्तः आसीत् इति कारणतः अद्यापि सः भगवतः श्रीविष्णोः महान् भक्तः इति कृत्वा तस्य नाम स्मर्यते। प्रह्लादः यदा मातृगर्भे आसीत् तदा तस्य पितृव्यं हिरण्याक्षं भगवतः विष्णोः वराहावतारः अहन्। तत्पश्चात् तस्य पिता हिरण्यकशिपुः अत्यन्तं कुपितः भूत्वा भगवतः ब्रह्मणः तपस्यां कर्तुम् अगच्छत्। हिरण्यकशिपोः यावत् पर्यन्तं तपस्या पूर्णा नाभवत् तावत् पर्यन्तं प्रह्लादस्य माता कयाधुः नारदमुनेः आश्रमे आसीत्। अत्रान्तरे नारदमुनिः कयाधुं हरेः भजनं भगवतः श्रीविष्णोः कथां च विस्तरेण श्रावयति स्म। नारदमुनेः तत्प्रवचनस्य सकारात्मकप्रभावः कयाधोः गर्भे स्थितस्य अजन्मप्रह्लादस्य उपरि भवति स्म।

तदेव कारणं यद् यथा प्रह्लादस्य जन्म अभवत् तदा सः महान् विष्णुभक्तः अभवत्। अत्रान्तरे हिरण्यकशिपोः तपस्या समाप्ता अभवत्, भगवतः ब्रह्मणः सः त्रयाणां लोकानां मध्ये सर्वशक्तिशाली इत्यस्य वरं प्राप्य स्वराज्यं प्रत्यागच्छत। पुनश्च सः त्रिषु लोकेषु स्वाधिकारम् अस्थापयत्, देवराजम् इन्द्रं च स्वसिंहासनाद् विच्युतम् अकारयत्। हिरण्यकशिपुः तपस्यां समाप्य पुनः स्व-राज्यं प्रत्यागच्छत् इति सूचनां प्राप्य कयाधुः प्रल्हादः च नारदमुनेः आशीर्वादं स्वीकृत्य स्वराज्यं प्रत्यागच्छताम्। हिरण्यकशिपुः भगवतः ब्रह्मणः प्राप्तेन वरेण अतीव शक्तिशाली अभवत्। तदेव अहंकारकारणात् सः भगवन्तं श्रीविष्णुम् ईश्वरं न मन्यते स्म। आत्मानं हि ईश्वरः इति सः मन्यते स्म। त्रिषु लोकेषु यः कोऽपि वा भगवतः विष्णोः पूजां करोति स्म तमेव हन्ति स्म सः। परन्तु यदा सः तस्य पुत्रः प्रह्लादः भगवतः श्रीविष्णोः महान् भक्तः इति अजानात् तदा सः क्रोधाग्नौ ज्वलति स्म। सः हिरण्यकशिपुः स्वीयं पञ्चवर्षीयं लघुबालकमपि हन्तुं बहुवारं विविधैः कौशलैः प्रयत्नम् अकरोत् चेदपि सः सफलः नाभवत्। भगवान् श्रीविष्णुः स्वयं सर्वदा तं रक्षति स्म।



एकदा यदा हिरण्यकशिपुः प्रह्लादस्य उपरि अत्याचारं कुर्वन्नासीत् तदा भगवान् विष्णुः अत्यन्तं कुपितः भूत्वा भयङ्करं रूपम् अधरत् , यद् नृसिंहावतारस्य रूपम् आसीत्। भगवान् श्रीविष्णुः नृसिंहरूपं धृत्वा हि प्रह्लादस्य पितरं हिरण्यकशिपुम् अहन्। तत्पश्चात् प्रह्लादः भगवतः नृसिंहस्य कोपं शमयति स्म। भगवान् नृसिंहः अपि स्वीये परमभक्ते प्रह्लादे अतीव स्निह्यति स्म। अपिच प्रह्लादस्य पितुः सिंहासनं तस्मै अददात्। भगवान् श्रीविष्णुः प्रह्लादे अतीव सन्-तुष्टः भूत्वा त्रयाणां लोकानामपि राज्यम् अददात्।

# 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः यात्रापूजास्नानार्थं

महाकविकालिदासः संस्कृतसाहित्यस्य अमर कविरस्ति। ते संस्कृतसाहित्यजगति स्वसप्तकृतिभिः मूर्धन्यस्थानं लब्ध्वा कविशिरोमण्युपाधिं प्राप्तवन्तः। महाकविकालिदासस्य कृतिषु लोकजीवनं प्रधानम्। तेषु कृतिषु लोकसंस्कृतिः प्रेमसौन्दर्यं प्रकृतिः धर्मः दर्शनमादयः च विशदरूपेण वर्णिताः। महाकवि कालिदासेन स्वरचनासु तीर्थमाहात्म्यमपि प्रतिपादितम्। तीर्थेन तात्पर्यमस्ति- 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः यात्रापूजास्नानार्थं गच्छन्ति।' हिन्दूधर्मशास्त्रे त्रिविधं धर्मं स्वीकृतम् - (क) जङ्गमः (ख) मानसः (ग) स्थावरः।2 अत्रापि त्रिविधं तीर्थं प्राप्यते। महाकविकालिदासेन स्वरचनासु महर्षिनारद कण्व विश्वामित्र वशिष्ठ दुर्वासा मारीच परशुरामा दीनामृषीणां महिमामण्डनं कृतम्, यत् जङ्गमतीर्थ स्योदाहरणानि सन्ति। महर्षिमारीचस्य दर्शनमहत्त्वं प्रदर्शयन् राजादुष्यन्तः वदति, यत् – पूर्वं कारणं भवति, तत्पश्चात् कार्यं भवति। किन्तु भवतां दर्शनप्रभावात् मया पूर्वं सपत्नीपुत्रदर्शनं प्राप्तं, तत्पश्चात् भवतां दर्शनमभवत् - उदेति पूर्वं कुसुमं ततः फलं, घनोदयः प्राक् तदनन्तरं पयः। निमित्त नैमित्तयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः। महाकवि कालिदासस्य कृतिषु सत्यक्ष मादयादान ज्ञानविज्ञान धैर्यसंयम मधुर भाषणादिनीतिमूल्याः विकीर्णाः सन्ति, यत् मानसतीर्थस्य प्रतीकोऽस्ति। अत्र दानस्य सर्वश्रेष्ठोदाहरणं राजारघौ प्राप्यते। येन स्ववीर्येण समग्रभारतं जितम्, तत्पश्चात् विश्व जितियज्ञे दक्षिणारूपे सर्वस्वं दत्तम् - 'तमध्वरे विश्वजिति क्षितीषं निःशेष विश्राणित कोषजातम्।' महाकवि कालिदासेन प्रसङ्गानुसारेण विविध स्थावर तीर्थ स्थलानां वर्णनं कृतम्। यानि निम्नबिन्दुषु द्रष्टुं शक्नुमः - (1) देवगिरिः - महाकविकालिदासेन स्वखण्डकाव्यमेघदूते रामगिर्याश्रमात् अलकापुरीपर्यन्तं मार्गवर्णनं कृतम्। तस्मिन् मार्गे आगतानां स्थलानां वर्णनमपि कृतम्। तत्रैव कविः देवगिरौ स्थायीरूपे निवसन्तं कार्तिकेयं स्नापयितुं मेघं याचते। अद्यतन देवगढो एव देवगिरिरस्ति, यत्र स्कन्दस्य पवित्र स्थलमस्ति - तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा। पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः। कुरुक्षेत्रम् - महाकवि कालिदासः मेघाय ब्रह्मावर्त जनपदस्य क्षत्रिय युद्ध सूचक कुरुक्षेत्रे वर्षितुं कथयति।

# 'मुक्तिर्हित्वा अन्यथा रूपं स्वरूपेण व्यवस्थितिः'

उपोद्घातः, मुक्तेः संज्ञा, विप्रपूजामाध्यमेन मुक्तिः, दर्शनमाध्यमेन मुक्तिः, अर्चनमाध्यमेन मुक्तिः, क्रियायोगमाध्यमेन मुक्तिः, अकपटभक्तिमाध्यमेन मुक्तिः, उपदेशपालनमाध्यमेन मुक्तिः, श्रवणमाध्यमेन मुक्तिः, पठनमाध्यमेन मुक्तिः, विष्णु सेवामाध्यमेन मुक्तिः, सत्सङ्गमाध्यमेन मुक्तिः, आत्मसमर्पण माध्यमेन मुक्तिः, व्रतपालनमाध्यमेन मुक्तिः, गङ्गातीर्थसेवनेन मुक्तिः, उपसंहार इत्यादयः। उपोद्घात वासुदेव परावेदा वासुदेव परासखाः। वासुदेव परायोगा वासुदेव पराः क्रिया। वासुदेव परं ज्ञानं वासुदेव परं तपः। वासयदेव परो धर्मो वासुदेव परा गतिः। पौराणिकसाहित्यम् सर्वेषाम् अचिन्त्यतत्त्वानां नवरूपायनं भवति। अस्मिन् साहित्ये धर्मदर्शन समाजार्थनीतिराजनीति विज्ञानेतिहासभूगोलादयः विषयाः नवरूपेण सन्ति। उच्यते - 'पुरा नवं भवति इति पुराणम्।' अष्टादश उपपुराणेषु कल्किपुराणम् एकतमम्। पुराणेऽस्मिन् जीवस्य मोक्षलाभस्य विषयः सुष्ठुरूपेण वर्णितः। अन्यत् पुराणवत् पुराणमिदं जीवस्य मुक्तिं स्वीकरोति। मूलतः जीवः अविद्यावशात् पुनः-पुनः जन्ममरणचक्रम् आगच्छति गच्छति च। संसारपाशेन आच्छाद्य बहुविधं दुःखं सहते। केवलं कल्किपुराणस्य मार्गेण जीवः गमनकृते सति अपि तद्दुःखम् अनायासेन निराकृतं भवति। तस्मात् अस्मिन् पुराणे मोक्षलाभस्य उपायरूपेण विप्रपूजा, भगवतः कल्केः अर्चनम्, पादवन्दनम्, स्तुतिकीर्तनम्, तीर्थस्नानम्, दानम्, व्रतपालनम्, साधुसङ्गलाभादयः विषयाः उल्लिखिताः भवन्ति। भवार्णवम् अतिक्रमनार्थं एतानि मार्गाणि अपरिहार्याणि। अस्मिन् विषयसन्दर्भे स्वचिन्तनं मया उपस्थाप्यते।

मुक्तेः संज्ञा मुक्तिशब्दस्य पर्यायवाचकशब्दः भवति मोक्षः। यदा जीवः भोगासक्तिसम्पन्नं जड़देहं त्यक्तवा आत्मस्वरूपं जानाति तदा तस्य मुक्तिर्भवति। उच्यते भागवतपुराणे- 'मुक्तिर्हित्वा अन्यथा रूपं स्वरूपेण व्यवस्थितिः।' अपि च निरालम्व-उपनषिदि कथ्यते - 'नित्यानित्यवास्तविचारादनित्यसंसारसमस्त-संङ्कल्पक्षयो मोक्षः।' अर्थात् यदा वस्तुविचारेण नित्यं वस्तुनिर्णितं भवति तदा अनित्यसंसारस्य समुदायसंकल्पस्य विनाशो भवति। सर्वसंकल्पनाशात् जीवस्य मुक्तिर्भवति। पुराणे पञ्चविधा मुक्तयः सन्ति। ताः खलु यथा- सालोक्यमुक्तिः, सामीप्यमुक्तिः, सायुज्यमुक्तिः, सार्ष्टिमुक्तिः, सात्मतामुक्तिश्च। कल्किपुराणे एतादृश्यः मुक्तयः परिलक्ष्यन्ते। अर्चन माध्यमेन मुक्तिः ये जनाः दशविधयज्ञैः परिसंस्कृताः, ते एव ब्रह्मणः ब्रह्मवादिनश्च। अमी विप्राः यज्ञाध्यनदान तपस्यावेदपाठेन्द्रियस-'यमनैः वेदानुसारेण तन्त्रानुसारेण च भक्तिपूर्वकं हरिं प्रीणन्ति। यो हि ब्रह्मणेन ब्रह्मणीगर्भे जायते, गर्भाधानादिभिः दशविधसंस्कारैः संस्कृतो भवति, यश्च त्रिसन्धायां गायत्रीमन्त्रं जपति, पूजां करोति, तेन सह य एव तपस्वी, सत्यवादी, धीरः, धर्मात्मा स हि यथायथभगवद्भक्तः। स भगवतः विष्णोः सन्तोषविधानार्थं तस्य पूजाप्रकरणं जानाति। तद् ज्ञात्वा सदा आनन्दमयरूपेण स्थित्वा स संसारसागरात् आत्मानं रक्षति। कल्किपुराणे प्राप्यते -

**ब्रह्मण्यां ब्रह्मणाद् यातो गर्भाधानादिसंस्कृतः।**
**सन्ध्यात्रयेण सावित्री-पूजा-जप-परायणः॥**
**तपस्वी सत्यवाग्धीरो धर्मात्मा त्राति संसृतिम्।**
**विवष्णवर्च्चनमिदं ज्ञात्वा सदानन्दमयो द्विजः॥**

ये ब्राह्मणाः यज्ञाध्ययनादिसत्कार्यानाम् सम्यग्भावेन पालयित्वा भगवन्तं कल्किं स्तुवन्ति, तपस्या-दानादिकार्यैः तस्य नाम संकीर्त्तयन्ति, तस्य सेवायां नियुक्तं भवन्ति, ते एव ब्रह्मणाः भगवच्छरीरस्वरूपाः तदात्मकाश्च। वस्तुतस्तु ये मानवाः मायाबलेन सृष्टाः, ते सर्वैव भगवतः कल्केः सारभूतांशमात्रम्। तस्मात् सर्वे तच्छरीरं प्रविशन्ति, लीयन्ते वा। ममांश मायया सृष्टा यतो मायया विशन् लये। एवं विधा ब्रह्मणा ये मत्शरीरं मदात्मिका। विप्रपूजामाध्यमेन मुक्तिः ब्रह्मणगणः मृत्तिका-भस्म-चन्दनादिभिः तिलकं दधाति, ललाटदेशतः शिखिनं यावत् धर्मकर्मणः अङ्गस्वरूपोज्ज्वलं त्रिपुण्ड्रधारणं करोति। एतद् त्रिपुण्ड्रमिदं ब्रह्मा-विष्णु-महेश्वराणाम् आवासस्थलम्। अतः तद्दर्शनेन सर्वं पापं सपदि विनश्यति। किञ्च स्वर्गं ब्रह्मणानां करायत्तम्। किमर्थं मन्तव्यमिदं सङ्गच्छते? एतद्विषये पुराणकारः न मौनव्रतम् अवलम्बते। तदुत्तरे तेनोच्यते यद् ब्रह्मणगणस्य वाक्ये वेदः, हस्ते हव्यम्, गात्रे समुदायस्तीर्थं धर्मानुरागश्च, नाभौ त्रिगुणा प्रकृतिः सदा राजते। अपि च सावित्री तस्य कण्ठहारस्वरूपा, अन्तःकरणं तस्य ब्रह्मस्वरूपम्, अनेन वक्षःस्थले धर्म एव सदा पदं करोति। मूलतः भूसुरः भवति ब्रह्मणगणः। अतः ब्रह्मणगणस्य अर्च्चनं सम्मानञ्च सर्वेषां कर्त्तव्यम्। कुतः ते गार्हस्थाश्रमे अवस्थित्यापिभगवद्धर्मं प्रचारितवन्तः। यः खलु ब्रह्मणगणस्य महाभाग्यविषयोऽयं शृणोति, स हि सर्वपापेभ्यः प्रमुच्यते। तेन सह स कलिदोषात् सदा मुक्तिं लभते। तदर्थं तस्य हृदि किमपि भयं न तिष्ठति। उक्तञ्च कल्किपुराणे - महाभाग्यं ब्रह्मणानां सर्वपापप्रणाशनम्। कलिदोषहरं श्रुत्वा मुच्यते सर्वतो भयात्। दर्शनमाध्यमेन मुक्तिः यो पुण्यात्मा भगवत्याः पद्मायाः बाहुलताभ्यां वद्धञ्च तस्याः वदनामृतं पास्यति, तस्य स्वर्गलाभार्थं तपस्या-जपदानादिधर्मानुष्ठानानां किमपि प्रयोजनं नास्ति। यो अलौकिकक्षमतासम्पन्नपद्मायाः अलक-तिलकसंयुक्तचञ्चल-कुण्डलमण्डित-विलोललोचनालंकृतम् वदनसुधाकरं द्रक्ष्यति, तस्यापि पुनर्जन्म न भविष्यति। तस्मात् मुमुक्षुजनस्य तद्दर्शनलालसां सदा कर्त्तव्यम्। अत्र उल्लिख्यते - तिलकालकसंमिश्रं लोलकुण्डलमण्डितम्। लोलक्षणोल्लसद्वक्त्रं पश्यतां न पुनर्भवः। क्रियायोगमाध्यमेन मुक्तिः अर्च्चनविषये साधु वर्णनमत्र प्राप्यते। यथा प्रत्यहं प्रातः निस्नातः साधकः नित्यकर्माणि परिसमाप्य च शुचिस्निग्धः सन् आचमनार्थं जलं स्प्रक्ष्यति। तदनन्तरं स्वीयासने उपवेक्ष्यति। तदा केशव कृत्यादिन्यासेन तन्मयीभूत्वा स्वात्मानं विष्णुमयं मत्वा आसनं ग्रहिष्यति। अथ मूलमन्त्रं जप्त्वा पाद्यार्घ्याचमनीयभूषणाद्युपचारैः अर्चयिष्यति। तत्काल हृत्पद्मे भक्तः प्रसन्नवदनम् अभीष्ट फलदायकं तद्देवं श्रीचरणकमलम् आरभ्य केशादि यावत् हृदये ध्यात्वा 'ॐ नमो नारायणाय स्वाहा' -इत्यादि मन्त्रः अवश्यमेव पठिष्यति। अनन्तरम् - योगेन सिद्धबिबुधैः परिभाव्यमानं लक्ष्म्यालयं तुलसिकाचित् भक्तभृङ्गम्। प्रोत्तुङ्गरक्तन खराङ्गुलि पत्राचित्रं गङ्गारसं हरिपद्माम्बुजमाश्रयेऽहम्। स्तुतिरियम् अवश्यमेव पठेत्। पाठकाले भक्तजनस्य भगवतः विष्णोः चरणकमलादिसौष्ठवाङ्गविशिष्टं सर्वाङ्गसुन्दरम् अपूर्वविग्रहं मनसि नित्यं ध्यात्वा स्तुतिं कुर्य्यात्। ये जनाः भक्तिसहकारेण विष्णोः आद्यमनोहररियं एकाग्रचित्ते ध्यात्वा षोड़शश्लोकरूपपुष्पैः स्तुवन्ति, प्रणामपूर्वकं पूजयन्ति वा, ते एव विधिज्ञजनाः शुद्धाः मुक्ताश्च सन्तः ब्रह्मानन्दं आस्वदन्ते। पुराणेऽस्मिन् उक्तम् - ये भक्ताद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोड़शश्लोकपुष्पैः। स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति। पद्मया कथितमिदं स्तोत्रम् अतीव पवित्रम्, धन्यम्, यशस्करम्, आयुष्यम्, परमस्वस्त्ययनमूलकम्। तद् पाठकृते सति परलोके इहलोके च धर्मार्थकाममोक्षनामकचतुवर्गानाम् पाठकः लब्धुं शक्नोति। ये महात्मनः स्तोमिदं श्रद्धासहकारेण पठन्ति, ते अवश्यमेव सर्वपापेभ्य आत्मानं मोचयितुं समर्थाः भवन्ति। अत्रोच्यते - पठन्ति ये महाभागा मुच्यस्तेऽंहसोऽखिलात्। धर्मार्थकाममोक्षणां परत्रेह फलप्रदम्।अतः मन्त्रज्ञसाधकस्य अनेन प्रकारेण जगदीश्वरं विष्णुं पूर्णात्माज्ञानं कृत्वा आचरणात् केशदामं यावत् भक्तिपूर्णहृदये ध्यात्वा मूल-मन्त्रं जपेत्। मतिमान् मानवः तद् जपित्वा साष्टाङ्गं प्रणमिष्यति। तदनन्तरं विष्वक्सेनादिभ्यः पादार्घ्यनैविद्यादयः प्रदास्यति। विष्णुनिवेदितवस्तु हृदि संस्थाप्य मनसा तं सर्वव्यापीपरमसत्तां चिन्तयित्वा नृत्यगीताभ्यां हरिसंकीर्त्तने आत्मानं नियुक्तं कुर्य्यात्। ततः निर्माल्यं शिरसि ध्यात्वा नैवेद्यं सेवेत। एवं पूजां समर्प्य सकामजीवस्य मनोवासना सफलतां भवति। परन्तु यो मानवः अनासक्तः भवति, तस्य मुक्तिं लभते। उक्तञ्च कल्किपुराणे - तत उद्वास्य हृदये स्नापयेन्मनसा सह। नृत्यन् गायन् हरेर्नाम तं पश्यन् सर्वतः स्थितम्। ततः शेषं मस्तकेन कृत्वा नैवेद्यभूग् भवेत्। इत्येतत् कथितं कीर कमलनाथ सेवनम्। सकामानां का-मपूरमकामामृतदारकम्। श्रोत्रान्दकरं देव-गन्धर्व-नर हृतप्रियम्। भगवतः विष्णोः अमृतमयं पवित्रं स्तोत्रमिदं श्रवणमाध्यमेन पा-पात्मा नरोऽपि तस्यानुग्रहेण मुक्तिं प्राप्नोति। अपि च कल्क्यावताररूपिणः भगवतः विष्णोः दर्शनेनाऽपि दर्शनार्थी मुक्तिं लब्धुं शक्नोति। कुतः मुक्तिलाभविषये एतद्भिन्नम् अन्यत् मार्गं न विद्यते। अनेन दीर्घकालं यावत् तीर्थं भ्रिमत्वा मुनिवरः अनन्तः मुक्तिम् अलभत्।

अकपटभक्तिमाध्यमेन मुक्तिः मनो हि संसारबन्धनात् मुक्तेः मुख्यकारणम्। जगदीश्वरस्य मायानुसारेण मनो हि सकामनरं सं-सारचक्रे आनयति। कामनावशात् स कर्म कृत्वा विविधं दुःखं लभते। तस्मात् मोक्षार्थीजनः मनःवशीकरणार्थं भगवति विष्णौ अकपटभक्तिं निवेदयति। वस्तुतस्तु अकपटभक्तिरेव निरन्तरं कर्मराशिं समूलं विनश्यति। विष्णुभक्तितः हि परमानन्दम् उत मोक्षं सम्भवेत्। मुनिवरेण अनन्तेन उच्यते - कर्म्मायत्तस्य जीवस्य मनो वन्धविमुक्तिकृतः। संसारयति लुब्धस्य ब्रह्मणो यस्य मायया। तस्मान्मनो निग्रहार्थं विष्णुभक्तिं समाचर। सुखमोक्षप्रदा नित्यं दाहिका सर्वकर्म्मणाम्। पापपुण्यरूपवशात् तदीयफलभोगार्थं संसारे जीवः जायते। अनयोः पापपुण्ययोः निःशेषविनाशेन जीवः मुक्तिभाक् भवति। नोचेत् मोक्षं न भवेत्। श्रीमद्भगवद्गीतायां भगवाान् श्रीकृष्णः अर्जुनं प्रति उक्तवान् - ज्ञानाग्निः सर्वकर्म्मणि भस्मसात्कुरुतेऽर्जुन। अकपट हरिभक्तितः द्वैताद्वैतयोश्च ज्ञानं भवति। अतः हरिभक्तिरेव आनन्द सन्दे-हदायिनी। हरिभक्त्या जीवस्य कोषस्य उत लिङ्गशरीरस्य द्रागेव विनाशं भवति। अतः कलिकुलनाशकस्य भगवतः कल्केः दर्शनेन परमनिर्वाणं लब्धुं शक्यते। तर्हि प्रगाढ़भक्त्या तस्य अर्चनं नित्यं कर्त्तव्यम्। अत्र परमहंसानन्तेन उच्यते - द्वैताद्वैत प्रदानन्द सन्दोहाहरिभक्तिका। हरिभक्त्याजीवकोष विनाशान्ते-महामते। परं प्राप्सति निर्वाणं कल्केरालोकनात् त्वया। मुनिवाक्यश्रवणेन व्रतनियमाद्यनुष्ठानमाध्यमेन कल्किपद्मयोश्च सम्यक् पूजनेन च मुक्तिभाजनं सम्भवेत्। अनन्तवृत्तान्तश्रवणेन पाठ्माध्यमेन च संसारस्य माया तिरोहिता भवति। अज्ञानान्ध कारविनाशस्य हेतोः संसारपाशं विच्छिद्य मुक्तिं प्रयच्छति। तस्मात् धर्मात्मा वैष्णवः विष्णुपरायणं भूत्वापि संसारसागरस्य विलासव्यसनं यत्नपूर्वकं परित्यजति। अस्मिन् पुराणे प्राप्यते - अनन्तस्य कथामेतामज्ञानध्वान्तनाशिनीम्। मायानियन्त्रीं प्रपठन् शृण्वन् वन्धनाद्विमुच्यते। उपदेश पालन माध्यमेन मुक्तिः कल्किः पद्मावत्यी च स्त्रीजनस्य मुक्तिलाभार्थं पापपुण्य विनाशकभक्तियोगस्य आत्मनिष्ठज्ञानयोगस्य, भेदज्ञानस्य कारणं कर्मयोगस्य उपदेशं प्रदत्तवन्तौ। स्त्रीजनोऽपि पद्मावत्या वाक्येन निर्मलं ज्ञानं लब्ध्वा इन्द्रियानि संयम्य सुदुर्लभं परमपदं प्राप्यते। तेन मुमुक्षुजनस्य इन्द्रियानि जित्वा भक्तिसहकारेण तदुपदेशपालनं कर्त्तव्यम्।

# अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः, प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नागच्छेत् तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते ज्योतिषसमीपं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवंरूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत् -तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः।
कुरिलकेन्द्रेगतस्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्। अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्रीलग्नेशः केन्द्रे स्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकरूपेण आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् - लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् - च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्।
गृहैरेतत्प्रश्नोदयसमयगैवच्यिमखिलं प्रविष्टः स्वं गेहं हिबुकगृहगे प्रोषितपुमान्। अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमन एवं बन्धविमोचनम् इत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति। चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं वा दम्पतिलाभाः इत्यादयः वृद्धिमूलकप्रश्नाः भवन्ति। दशमभावात् प्रवासविचारः करणीयः अर्थात् यात्रा, विदेशगमन, यात्रायां सुख.दुःख एवं लाभ-हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति। सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करित अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्ति-मूलकाः भवन्ति। एवंरूपेण तस्य ग्रन्थस्य व्याख्याकारः "डॉ. शुकदेवचतुर्वेदी" कथयति -
तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदुपथिक उपैति स्युर्यदा तत्र सौम्याः। हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः। अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति।

यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगतवस्तुनः आगमनं भवेत्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु अस्मिन् श्लोके लग्नात् द्वितीये, तृतीयभावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं विचारः भवति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत्येव। यदि सर्वग्रहाणां स्थित्यर्थमङ्गीक्रियते तर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्। पण्डितरुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेषु केवलबृहस्पतिशुक्रस्थितिरेव यात्राकरणजनान् गृहे स्थापयति नाम नैवगमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रह स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते।
लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्।
दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति।
बादरायणमतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् पाप अथवा शुभग्रहश्चेत् प्रवासजनागमनसूचना दीयते। वराहमिहिरमतानुसारेण एवं भवति -
लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः।
नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ।
लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थानेषु ग्रहस्थिते तर्हि प्रवासीजनागमनमभिलक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं भवेत्। अस्य श्लोकस्य व्याख्याकरणसमये "डॉ. शुकदेवचतुर्वेदीमहाभागः" कथयति यत् - एतेषु स्थानेषु शुभग्रहभवेत्तर्हि गृहात् पलायिताः, अदृश्यजाताः जीवाः गृहं शीघ्रमागमिष्यन्ति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धु एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति। आर्यासप्ततिग्रन्थे एवं कथितम् - दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्। बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः। प्रश्नलग्नात् तृतीये तथा द्वितीयभावेषु गुरुशुक्रौ भवेताम् तदा परदेशीजनागमनं सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि परदेशीजनाः अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्।

पण्डितरुद्रमणिः लग्नात् द्वितीयतृतीयभावविषये कथयति। परन्तु अन्याचार्याः द्वितीय-तृतीयभावविषये वदन्नपि लग्नं ते नैव अङ्गीक्रियन्ते। केचन द्वितीयतृतीयाभ्यां सह पञ्चमभावमपि अस्मिन् योगे स्वीकुर्वन्ति। परन्तु दैवज्ञजीवनाथस्य मतं तु अन्यथा वर्तते -
जीवो वा भार्गवो वाऽपि चन्द्रो वा सुखवेश्मनि।
पथिकं गृहमायान्तं जानीयात् प्रश्नवित्तदा।
चतुर्थभावे स्थितः सौम्यग्रहः शीघ्रमेव प्रवासीजनागमनसूचनां ददाति। गमनसम्बन्धप्रश्ने अस्य फलं विपरीतं भवेत्। अर्थात् यात्रीजनस्य अन्यत्रप्रस्थानं नैव सम्भवेत्। किन्तु प्रश्नसिन्धुकारस्य मतमेवं वर्तते - लग्नस्य पार्श्वोपतौ विधोर्वा स्मरस्य वा सौम्यखगौ खगौ वा। एकत्र योगेऽपि गतौ न वेति प्रस्थातुकामो न खलु प्रयाति। लग्नात् चन्द्रः सप्तमभावादद्वितीये तथैव द्वादशस्थाने द्वौ शुभग्रहौ स्थितौ तावपि नान्यग्रहैः युक्तौ चेत् यात्राकामुको जनः यात्रा नैव कर्तुं समर्थो भवेत्। यदि पूर्वोक्तस्थाने गुरुः तथा शुक्रः स्थितस्तर्हि प्रवासी शीघ्रमेवगृहमागमिष्यति। उक्तस्थानेषु अन्यग्रहस्थितश्चेत् प्रवासी दूरदेशं गमिष्यति। परन्तु प्रश्नमार्गग्रन्थे विरुद्धरूपेण उक्तमस्ति यथा - आरूढे चरभे चतुर्थमृतिगाः सोम्यागृहस्यागमं कुर्वन्त्यर्थसहोत्थगा अपि पुनः प्रस्थाय मार्गागतम्। कर्मेशो विनिवर्तयेन्नवमगो वक्री ततः प्रोषितं मार्गस्थं तमुदीरयेत् द्विष उपेत्यावस्थिते लग्नये। अर्थ (द्वितीयभाव), सहोत्थ (तृतीयभाव ) एतयोः यदि शुभग्रहश्चेत् प्रोषितव्यक्तिः मध्ये मार्गे आगत्य पुनर्गच्छतीति वक्तव्यम् भवति। कश्चिद्ग्रहः सप्तमगोऽरिगो वा केन्द्रे गुरुश्चागमनं करोति। त्रिकोणगो ज्ञो यदि वा भृगुः स्यात्पांथागमश्चेद्धिमगुर्मृतिस्थः। यदि कोऽपि ग्रहः सप्तमे वा षष्ठभावे स्थितः, केन्द्रे बृहस्पतिस्थितस्तर्हि पान्थो आगच्छेत्। त्रिकोणे बुधः अथवा शुक्रश्चेदपिअदृश्यव्यक्तिः पुनरागच्छेत्। अत्र पण्डितरुद्रमणिः कथयति यत् लग्नात् षष्ठ-सप्तमभावयोः कोऽपि एक अथवा द्वौ ग्रहौ अर्थात् उभयभावं सग्रहञ्चेत् अथवा एक एव भावः सङ्ग्रहश्चेत् केन्द्रे (सप्तमरहितं) गुरुश्चेत् प्रोषितागमनं सम्भाव्येत। एवं प्रकारेण त्रिकोणे बुधशुक्रौ आगमनकारकौ भवतः। सामान्यतया केन्द्रत्रिकोणे शुभग्रहस्थिते 3,6,11 स्थानेषु पापग्रहः शुभफलस्य सूचना ददाति। परन्तु त्रिकोणे एकाकीबुधो वा शुक्रोऽपि निवृत्तिकारको एव। पण्डितरुद्रमणिः अस्मिन् लघुश्लोके एव अत्यधिकयोगान् उक्तवानासीत्। लग्नगतगुरुः, षष्ठगतः अन्यग्रहः,

लग्नगतगुरुः, सप्तमगत ग्रहः, चतुर्थगतगुरुः वा षष्ठ सप्तमस्थानयोः ग्रहः एते मिलित्वा चत्वारयोगान् कुर्वन्ति। एवं प्रकारेण सप्तमगतगुरुः अथवा षष्ठसप्तमस्थयोः अन्यग्रहस्य द्वौ योगौ, दशमभावगतगुरोः द्वौ योगौ आहत्य अष्टयोगाः भवन्ति। एवं प्रकारेण पञ्चमे वा नवमे बुधस्तथैव, षष्ठे, सप्तमे भावेषु अन्यग्रहचेत् योगद्वयं सम्भाव्यते।पञ्चमे नवमे वा शुक्रः, षष्ठे सप्तमे अन्यग्रहाः चेत् योगद्वयं सम्पद्यते। एवम् आहत्य योगचतुष्टयं निर्माति। एवमेव पञ्चमे बुधः, षष्ठे ग्रहः, पञ्चमे बुधः, सप्तमे ग्रह इत्यादि प्रकारेण योगाणां अधिकभेदोऽपि जायते। परन्तु वयं त्रिकोणगतबुधो वा षष्ठसप्तमगतग्रहेण सह द्वौ द्वौ योगौ अङ्गीकुर्म एव। यदि केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्यापि श्लोके सम्बन्धमुररीकृत्य अर्थज्ञानेनापि भेदोपजायते। वयं ज्ञास्यामो यत् केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्थिते प्रोषितगमनं शास्त्रानुकूलमेव भवति। विषयोऽयं श्रीदैवज्ञवल्लभायाम् एवं प्रतिपादितोवर्तते - बृहस्पतौ केन्द्रगते तु कश्चन ग्रहो भवेत् षष्ठगतोऽथ सप्तमः। भवेत्तदा प्रोषित पुरुषागमस्त्रिकोणगे चन्द्रसुते सितेऽपि वा। पण्डितरुद्रमणि कथयति यत् - अष्टमस्थ चन्द्रः केन्द्रे शुभग्रहश्चेत् पापग्रहरहितश्चेत् पथिको लाभ पूर्वक सुखसहितं गृहमागच्छेत्। द्वितीये, तृतीये, अष्टमे, नवमभावेषु शुभग्रहः चरराशौ स्थितश्चेत् प्रवासीपुरुषः मार्गमध्येऽस्तीति ज्ञेयम्। चन्द्रलग्नेशौ द्वादशस्थाने अथवा लग्नेस्थितौ चेत् इत्थसालं करोति तर्हि प्रवासी आगमिष्यति। अन्यप्रकारः चेत् विलम्बेन आगमिष्यति। पञ्चमभावे स्थित चन्द्रः, तृतीयस्थग्रहेण सह इत्थसालं करोत्यथवा सप्तमे-अष्टमे-द्वितीये-चतुर्थभावेषु चन्द्रः चेत् प्रवासी आगमिष्यति। परन्तु एतस्मिन् विषये पृथुयशस्य मतं किञ्चित् भिन्नं भवति - अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः। प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः। यदि प्रश्नलग्ने अष्टमस्थाने चन्द्रः स्थितस्तथैव केन्द्रे कोऽपि पापग्रहः न भवति तर्हि प्रवासी सुखपूर्वकं पुनरागमिष्यति। यदि अष्टमस्थ चन्द्रेण सह शुभग्रहः केन्द्रस्थाने भवेत्तर्हि प्रवासी अधिकधनमर्जयित्वा परदेशात् आगमिष्यति।
पण्डितरुद्रमणिमतानुसारेण - लग्नचन्द्रौ चरराशौ अथवा चरराशेः नवांशे स्थिते तथैव केन्द्रे (1,4,7,10) 5,11,3 भावेषु शुभग्रहः स्थिते सति प्रवासी आगच्छेद्येव। यदि 3,5,6,9,7 भावेषु वक्रीग्रहः स्थितस्तर्हि प्रवासी शीघ्रगमनं करिष्यति।

रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

## ॥श्री राम कथा॥

**श्रीराम राम रघुनन्द राम राम**
**श्रीराम राम रणकर्कश राम राम।**
**श्रीराम राम भरताग्रज राम राम**
**श्रीराम राम शरणं भव राम राम॥**

अथ भगवान् श्रीरामो सुग्रीवमहाभागेन सह किष्किन्धानगरं प्रति प्रस्थानमकरोत्। नगरस्य समीपमागत्य श्रीरघुनाथमहाभागः श्रीसुग्रीवं बालीं समीपं सम्प्रेषितवान्। वानराजसुग्रीवः श्रीरामस्य बलाश्रितं भूत्वा किष्किन्धानगरस्य मुख्यद्वारमागत्य तेन सह युद्धं कर्तुमुच्चैर्गर्जितवान्।
यदा वानरेन्द्र बाली सुग्रीवस्य युद्धस्य कृते गर्जनं श्रुतवान्। तत्क्षणः क्रोधातुरं भूत्वा यथैव सः स्वकक्षाद्बहिर्गन्तुं तत्परो जातः, तथैव तद्भार्या देवी तारा कथितवती, हे नाथ ! भवता गृहाद्बहिरिदानीं न गन्तव्यम्, यतोहि सुग्रीवोऽधुना याभ्यां सह समागतवान्, तौ महान्तौ बलवन्तौ अयोध्यानरेशो महाराजदशरथस्य सुपत्रौ स्तः।

सुनत बालि क्रोधातुर धावा।
गहि कर चरन नारि समुझावा?
सुनु पति जिन्हहि मिलेउ सुग्रीवा।
ते द्वौ बंधु तेज बल सींवा?

हे नाथ! श्रीरामः साक्षादनादिपुरुषो नारयणोऽस्ति। अतः भवान् पुनर्विचारयतु। इदानीं सुग्रीवेण सह कदापि युद्धं करणं नोचितमिति भवन्तं प्रार्थयामि। स्वभार्याताराया वचनं श्रुत्वा बाली तामकथयत्।
हे प्रिये! तव प्रकृतिर्भयप्रधाना वर्तते। श्रीराघवेन्द्रः श्रीरामः समदर्शी वर्तते। तदपि यदि सः मां हनिष्यति तर्हि मत्सद्गतिर्भविष्यति। एतादृशं कथयित्वा बाली मदान्धो भूत्वा सुग्रीवं तृणतुल्यं मत्वा तेन सह द्वन्दयुद्धं कर्तुं तत्रैव गतवान्।

'अस कहि चला महा अभिमानी।
तृन समान सुग्रीवहि जानी?'

यदैव वानरेन्द्र बाली सुग्रीवमपश्यत्। सोऽभिमानेनोच्चैर्गर्जनं कृत्वा सुग्रीवस्योपरि तीव्रगतिना मुष्टिप्रहारं कृतवान्।

-क्रमशः

आचार्य अरविंद पांडेय

# 'अश्व इव प्रतिकृतिर्यस्य सः अश्वकः'

प्रस्तावना - शाब्दबोधाय वृत्तिज्ञानमावश्यकम्। तत्र शाब्दिकमते तु वृत्तिर्द्विधा, शक्तिः व्यञ्जना च। शक्तेः ग्राहकाणितावत् - 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्यभियुक्तोक्त्या व्याकरणादीनि। व्याकरणाद्यथा- 'दक्षस्यापत्यं दाक्षिः'1 इत्यत्र दाक्षिपदस्य दक्षापत्ये शक्तिग्रहः, 'अश्व इव प्रतिकृतिर्यस्य सः अश्वकः'2 इत्यत्र अश्वकपदस्य गर्दभे शक्तिः। उपमानाद्यथा - 'गोसदृशो गवयः' इति श्रुतस्य वने तथाकृतियुक्तपशुदर्शनात् गवयोऽयमिति ज्ञानम्। कोशाद्यथा - 'शम्भुरीशः पशुपतिरि'त्यादि। आप्तवाक्याद्यथा - अयमश्वपदवाच्यः इति। व्यवहाराद्यथा - 'अश्वमानय' इति श्रुते आनीतं पशुं दृष्ट्वा अश्वोऽयमिति ज्ञानम्। वाक्यशेषाद्यथा - 'यवमयश्चरुर्भवति' इत्यत्र यवशब्दस्य आर्य्यव्यवहारमनुसृत्य दीर्घशूकस्य, म्लेच्छव्यवहारमनुसृत्य कङ्गोश्च सन्देहे - वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।।
इति वाक्याद् दीर्घशूकस्यैव ज्ञानं भवति। विवृतिर्विवरणं, तस्माद्यथा - 'गौः सास्नादिमत्पिण्डमि'ति विवरणात्सास्नादिमत्पिण्डस्य गोपदवाच्यताज्ञानम्, यद्वा 'हरिर्वासुदेवः' इत्यत्र नानार्थकस्य हरिपदस्य वासुदेवेऽर्थे शक्तिग्रहः। सिद्धपदस्य सान्निध्याद्यथा - 'कमले मधुकरः पिबति मधु' इत्यादौ कमलपदसान्निध्यान्मधुकरपदस्य भ्रमरे शक्तिः, मधुपदस्य पुष्परसपदे च। शक्तिविषये तार्किकमतम् - तत्र प्रथमं प्राचीन नैयायिकाः एवं ब्रूवते - 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति अर्थविशेष्यिका पदप्रकारिका, 'इदं पदमिममर्थं बोधयतु' इति पदविशेष्यिकाऽर्थप्रकारिका ईश्वरेच्छा शक्तिः। एवञ्चोक्ता ईश्वरेच्छारूपा शक्तिरेव सम्बन्धोऽपि वर्त्तते। आधुनिकसङ्केतेष्वपि 'एकादशेऽह्नि पिता नाम कुर्य्यात्' इति श्रुतिवचनेन ईश्वरेच्छा भवत्येव। अस्मदादिषु अपभ्रंशेषु नामसु शक्तिग्रहस्तु शक्तिभ्रमेण लक्षणया वा जायते। नव्यनैयायिकास्तु इच्छा एव शक्तिरिति मन्यन्ते । तेन आधुनिकसङ्केतेष्वपि प्रयोगकर्त्तुः इच्छासत्त्वात् शक्तिर्भवत्येव, लक्षणायाः आवश्यकता न स्यादिति लाघवम्। ईश्वरेच्छारूपायाः इच्छारूपायाः वा शक्तेः विषयतारूपः सम्बन्धः यद्यपि त्रिषु विषयेषु- पदे, अर्थे, शाब्दबोधे च विद्यते, तथा च विषयतासम्बन्धेन शक्तिमत्त्वं वाचकत्त्वम् अथवा वाच्यत्वमिति लक्षणेन अतिव्याप्तिदोषः स्यात्, तस्माद्- बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः,3 पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्यः4 इति बोध्यम्।
तार्किकमतखण्डनम् - तार्किकोक्ता ईश्वरेच्छारूपा शक्तिः न भवितुम् अर्हति। यतो हि यः पदपदार्थयोः सम्बन्धो भवेत्, सः एव शक्तिपदेन उच्येत। इच्छायाः सम्बन्धत्वाभावेन शक्तित्वाभावः। 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः।5 तथा च यः सम्बन्धिनोः आश्रयतायाः नियामकः, स एव सम्बन्धः कथ्यते। अत्र तु सम्बन्धिनौ पदपदार्थौ, तौ न इच्छायाः आश्रयौ, चेतने आत्मनि एव इच्छायाः आश्रयतासम्भवात्। अत एव घटशब्द इच्छावान्, तदर्थो वा इच्छावान् इति न व्यवहारः।
वैयाकरणमतम् - तत्रादौ कौण्डभट्टमतन्तन्निरसनञ्च प्रदर्श्यते - वैयाकरणभूषणसारे वाक्यपदीयकारिकया शक्तिस्वरूपमाह -
इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थः शब्दानां सम्बन्धो योग्यता तथा।।
इन्द्रियाणामित्यत्र निष्ठत्वं षष्ठ्यर्थः। स्वविषयेष्वित्यत्र निरूपितत्वं सप्तम्यर्थः। योग्यता कारणता। तथा चोन्द्रियनिष्ठा इन्द्रियविषयघटादिनिरूपिता या कारणता सा यथा अनादिस्तथा सकलशब्दनिष्ठा घटादिनिरूपिता योग्यताऽपि अनादिः। एवञ्च घटादिविषयकचाक्षुषादिज्ञाननिरूपिता योग्यता इन्द्रियनिष्ठा यथाऽनादिस्तथा शब्दनिष्ठा अर्थविषयकज्ञाननिरूपिता योग्यताऽप्यनादिः। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम्। बोधजनकत्वं शक्तिरिति भूषणकाराभिमतं मतम्। किन्तु बोधजनकत्वं शक्तिः अपि सम्बन्धो भवितुं नार्हति, पदे वृत्तितानियामकेन स्वरूपसम्बन्धेन स्थिता अपि पदार्थे तु वृत्तिताऽनियामकेन निरूपकतासम्बन्धेन तस्याः स्थितत्वात्।
मञ्जूषाकृन्मतम् - भट्टनागेशमते पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, तस्याः शक्तेः नाम वाच्यवाचकभावोऽस्ति। अस्याः शक्तेः बोधकः तादात्म्यसम्बन्धः6, तादात्म्यस्य च इतरेतराध्यासो वर्त्तते। पदार्थनिरूपिततादात्म्यवत् पदम्, पदनिरूपिततादात्म्यवान् अर्थः इति व्यवहारे प्रसिद्धत्वात् तादात्म्यस्य द्विष्ठत्वात्7 सम्बन्धत्वमुपपन्नम्। शक्त्या शाब्दबोधजननाय सम्बन्धः एव नियामको भवति। यथा दीपकादौ विद्यमाना प्रकाशिका शक्तिः वस्तु तावन्न प्रकाशयितुं प्रभवति यावत् प्रकाशस्य घटादिविषयस्य च संयोगसम्बन्धो न स्यात्। तस्मादेव प्रकाशेन सम्बद्धस्यैव घटादेः प्रकाशो भवति नासम्बद्धस्य।

| प्रकाशकः | शक्तिः | प्रकाशः | विषयः |
|---|---|---|---|
| सम्बन्धःफलम् दीपकः | प्रकाशकता | | |
| आलोकः | घटः | संयोगः | घटप्रकाशनम् |
| पदम् | वाच्य वाचक भावः | वाचकः(पदम्) | |
| वाच्यः(अर्थः) | | तादात्म्यम् | बोधः |

तथा च वाच्यवाचकभावरूपशक्तेः ज्ञानं तादात्म्यसम्बन्धेन भवति, तादात्म्यस्य च ज्ञानं शब्दार्थयोः परस्पराध्यासेन।
शक्तिभेदः - इयञ्च शक्तिः त्रिविधा - रूढिशक्तिः, योगशक्तिः, योगरूढिशक्तिश्च। तत्रादौ - रूढिशक्तिः - कल्पित प्रकृति प्रत्ययार्थबोधकत्वा समानाधिकरणा या किञ्चिदर्थनिरूपिता शक्तिः सा रूढिरित्युच्यते। मणिनूपुरशब्दौ शब्दकर्तृरूपार्थं स्तुति सम्बन्ध्य ग्रगमनकर्त्तारं वा न बोधयतः, अपितु रत्नमाभूषणविशेषं वेति रूढिशक्तिमत्त्वमनयोः। तथाहि समुदायार्थमात्रबोधकपदे शक्तिः रूढिः।
योगशक्तिः - अवयवार्थमात्रबोधकपदे शक्तिः योगः। यथा पाचक इत्यादौ। योगरूढिशक्तिः- यत्रावयवशक्तिसमानाधिकरणा च समुदायशक्तिस्तत्र योगरूढिशक्तिः। यथा पङ्कजादिपदे प्रकृति प्रत्ययार्थ पङ्कजनिकर्तृत्व शक्तिसमानाधिकरणा पद्मेतिसमुदायशक्तिः, तस्माद्योगरूढि शक्तिमत्वमस्य। क्वचित् योगरूढशब्देषु तात्पर्य्यग्राहकानुसारं रूढ्यर्थमात्रस्य योगार्थमात्रस्य वा बोधो भवति। यथा 'भूमौ पङ्कजम् उत्पन्नम्' इत्यत्र पङ्कजपदात् स्थलकमलम् इति रूढ्यर्थस्य एव भूमिपदसन्निधानात् बोधः, न तु पङ्कजनिकर्तृरूपस्य योगार्थस्य। शक्तिनियामकाः - नानार्थकशब्देषु वाच्यवाचकभावरूपा नाना शक्तिः भवति, सा संयोगविप्रयोगादिभिः शक्तिनियामकैः क्वचित् एकत्र अर्थे निश्चीयते। ते शक्तिनियामकास्तु -
संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः। भर्तृहरेः कारिकायामस्यां नाम्ना चतुर्दश शक्तिनियामकाः उक्ताः, तेषाञ्च क्रमशः उदाहरणानि प्रस्तूयन्ते - संयोगः - प्रसिद्धसंयोगसम्बन्धः इति, अस्योदाहरणम् - 'सवत्सा धेनुरि'त्यत्र वत्सस्य संयोगसम्बन्धज्ञानेन धेनुपदस्य गौः इत्यर्थे तात्पर्य्यनिर्णयः।
विप्रयोगः - प्रसिद्धसंयोगसम्बन्धस्य विच्छेदः इति, अस्योदाहरणम् - 'अवत्सा धेनुरि'त्यस्य वत्ससंयोगरहिता गौः इत्यर्थः। प्राप्तौ सत्यां निषेधः इति नियमात् यत्र प्राप्तिः तत्रैव निषेधः जायते।

# यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा, यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः

वत्ससंयोगेन गवि एव धेनु तात्पर्य्ये प्राप्ते अवत्सापदेन तादृशधेनोः अर्थात् गोः एव निषेधः, न महिष्यादेः। अत्र वत्सविप्रयोगज्ञानेन धेनुपदस्य गौः इत्यर्थे तात्पर्य्यावधारणम्। साहचर्य्यम् - सदृशस्य युगपत् प्रयोगः इति, अस्योदाहरणन्तु 'रामलक्ष्मणौ' इत्यत्र रामसाहचर्य्यात् दशरथापत्यलक्ष्मणः, लक्ष्मणसाहचर्य्याच्च दशरथापत्यरामः गृह्यते। एवञ्च परशुरामबलराम दाशरथि प्रभृति नानार्थवाचकस्य रामशब्दस्य सारस दुर्योधन पुत्र दाशरथि प्रभृतिनानार्थवाचकस्य लक्ष्मणशब्दस्य च परस्परसाहचर्य्येण दाशरथिरूपे अर्थे शक्तिः निश्चीयते। विरोधिता - विरोधिभावः इत्यर्थः, अस्योदाहरणम् - 'रामार्जुनगतिस्तयोः' इत्युदाहरणम्। परस्परविरोधकारणात् परशुराम दाशरथ्यादि वाचकस्य रामस्य कार्त्तवीर्य्यसहस्रार्जुनपाण्डवार्जुनवाचकस्य अर्जुनस्य क्रमशः परशुरामे सहस्रार्जुने च शक्तिः नियम्यते। अर्थः - प्रयोजनम्, अनन्यथासाध्यफलमित्यर्थः, अस्योदाहरणम् - 'अञ्जलिना जुहोति', 'अञ्जलिना सूर्य्यमुपतिष्ठते' इति । एकहस्ताञ्जलि-वाचकस्य, हस्तद्वयाञ्जलिवाचकस्य च अञ्जनिशब्दस्य अञ्जलिना जुहोति (हवनं कुर्य्यात्। इत्यत्र हवनरूपस्य अर्थस्य प्रयोजनस्य कारणात् एकहस्ताञ्जलिवाच्ये शक्तिः, अञ्जालिना सूर्य्यमुपतिष्ठते (सूर्य्योपस्थापनं कुर्य्यात्) इत्यत्र सूर्य्योपस्थापनरूपप्रयोजनबलात् हस्तद्वयाञ्जलिवाच्ये शक्तिः निश्चीयते। प्रकरणम् - वक्तृश्रोतृबुद्धिविषयतेत्यर्थः, अस्योदाहरणम् - 'सैन्धवमानयेत्यादिः।' लवणबोधकाश्वबोधकसैन्धवशब्दस्य भोजनज्ञानरूपे प्रकरणे लवणार्थे यात्राज्ञानप्रकरणे अश्वार्थे च शक्तिः अवधार्य्यते। लिङ्गम् - लीनमर्थङ्गमयति यत् तल्लिङ्गमर्थाज्ज्ञापकमित्यर्थः, अस्योदाहरणम् - 'अक्ताः शर्कराः उपदधाती'ति। अञ्जनञ्च आर्द्रीकरणद्रव्यम् घृततैलादिकम्। शर्कराः इष्टिकाचूर्णानि। उपदधाति अग्न्याधानार्थं वेद्यां परिस्थापयेत्। तथाहि अक्ताः इत्यादिवाक्यस्य अञ्जनविशिष्टेष्टिकाचूर्णानि अग्न्याधानार्थं वेद्यां स्थापयेदित्यर्थः। अत्र वाक्ये अक्तपदार्थघटकेन अञ्जनशब्देन घृतेन, तैलेन अथवा जलेन केन आर्द्रीकरणीयमिति विशेषनिर्देशाभावः। तथापि तद्वाक्यसमीपे तेजो वै घृतमिति घृतस्तुतिवाक्यप्रयुक्तत्वात् यः स्तूयते स विधीयते इति मीमांसाशास्त्रीयन्यायेन घृतेसाधकाञ्जने शक्तिः विधीयते। अन्यस्य शब्दस्य सन्निधिः - एकार्थ मात्र वाचक पदसमीपोच्चारणमित्यर्थः, अस्योदाहरणम् - 'रामो जामदग्न्यः' इति । परशुरामबलरामदाशरथ्यादिवाचकस्य रामशब्दस्य जामदग्न्यपदसन्निधानात् जमदग्नेः अपत्यम् परशुरामार्थे शक्तिः अवधार्य्यते। सामर्थ्यम् - अचरितार्थ शब्दार्थशक्तिः कारणता वेत्यर्थः, अस्योदाहरणम् - 'अभिरूपाय कन्या देया' इति। अभिरूपः अर्थात् सुन्दरः। कन्या अभिरूपाय सुन्दराय एव दीयते, पुनरपि अभिरूपाय इत्युक्ते सामर्थ्यात् विशेषणपदप्रयोगस्य सार्थक्यात् अभिरूपपदस्य अभिरूपतरे अतिशयसुन्दररूपवति इत्यर्थे शक्तिः लभ्यते।
औचिती - औचित्यम्, योग्यता चार्थः, अस्योदाहरणम् - यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः।।
श्लोकार्थस्तु - निम्बं यः परशुना, यः मधुसर्पिषा, यश्च गन्धमाल्याद्यैः छिन्द्यात्, सिञ्चेत्, पूजयेच्च, तस्य तस्य सर्वस्य कृते सः निम्बः कटुः अर्थात् तिक्तस्वादवान् एव भवति। श्लोकेऽस्मिन् क्रियापदाभावेऽपि औचित्यात् योग्यत्वात् परशुरूपकरणस्य छेदनार्थत्वप्रतीतेः छिन्द्यात् पदम्, मधुसर्पिःकरणस्य सेचना-र्थत्वप्रतीतेः सिञ्चेदिति पदम्, गन्धमाल्यादिकरणस्य पूजनार्थत्वप्रतीतेः पूजयेदिति च पदमध्यह्रियते।
देशः - स्थानमित्यर्थः, 'भात्यत्र परमेश्वरः' इत्युदाहरणम्। अत्र राजधानीदेशे परमेश्वरपदस्य राजेत्यर्थे शक्तिः निर्धार्य्यते।
कालः - समयः इत्यर्थः, 'चित्रभानुर्भाती'त्युदाहरणम् । अग्नेः सूर्य्यस्य वाचकं चित्रभानुपदम्। अत्र अर्थसन्देहे कालेन निर्णयो भवति। यदि रात्रौ वाक्यप्रयोगः, तदा अग्निरूपार्थस्य, यदि च दिने वाक्यप्रयोगः, तदा सूर्य्यरूपार्थस्य निश्चयो भवति।
व्यक्तिः - लिङ्गम् स्त्रीत्वपुंस्त्वाद्यर्थः, अस्योदाहरणम् - 'मित्रो भाति', 'मित्रं भाती'ति। अत्र पुँल्लिङ्गनिर्देशात् सूर्य्यवाचकस्य, क्लीबलिङ्गनिर्देशात् सुहृद्वाचकस्य शक्तित्वमवधार्य्यते।
स्वरः - उदात्तादयः, उदाहरणन्तु - 'स्थूलपृषतीमनड्वाहीमालभेत' इति याज्ञिकैः उच्यते, अत्र स्थूला चासौ पृषती (पृषदिति शब्दः बिन्दुवाचकः) इति कर्म्मधारयसमासे पृषत् इति शब्दस्य मत्वर्थे लक्षणया पृषत्वती (बिन्दुमती) अर्थः भवति। तथाहि कर्म्मधारयपक्षे बिन्दुमती गौः एवाभिधीयते। स्थूलाऽपि गौः एव। बिन्दूनां स्थौल्यं कृशत्वं वेत्यत्र न आग्रहः। बहुव्रीहिसमासपक्षे च स्थूलानि पृषन्ति यस्याः सा इति विग्रहे स्थौल्यं तु पृषत्सु एव। गौः स्थूला कृशा वेत्यत्र न आग्रहः। तत्र स्थूलपृषतीम् इत्यत्र कर्म्मधारयः बहुव्रीहिः वेति सन्देहे वैयाकरणः स्वरेण निश्चिनोति। तत्र स्थूलशब्दस्य लकाराकारस्य उदात्तत्वं दृष्ट्वा पूर्व्वपदप्रकृतिस्वरेण11 बहुव्रीहिः निश्चीयते, अपि च पृषतीत्यस्य ईकारेऽन्तोदात्तत्वं12 दृष्ट्वा कर्म्मधारयः निश्चीयते। कर्म्मधारयपक्षे बिन्दुमती स्थूला गौः इत्यर्थः, अत्र स्थूलशब्दः गवि विशेषणम्। बहुव्रीहिपक्षे स्थूलबिन्दुमती गौः इत्यर्थः, अत्र स्थूलशब्दः बिन्दौ विशेषणम्। प्रकृतोदाहरणे पूर्व्वपदप्रकृतिस्वरेण लकाराकारस्य उदात्तत्वात् बहुव्रीह्यर्थस्य निर्धारणम्।


**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
**-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**